आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५३

# सत्याषाढविरचितं श्रौतसूत्रम् ।

महादेवशास्त्रिसंकलितप्रयोगचन्द्रिकाव्याख्यासमेतम् ।

पञ्चदशषोडशप्रश्नात्मकः षष्ठो भागः ।

एतत्पुस्तकं

वे० शा० सं० रा० शंकरशास्त्रीमारुलकर

इत्येतैः संशोधितम् ।

तच्च

बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने



आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८४९

खिस्ताब्दाः १९२७



मूल्यं सार्धो रूपकः ( १८ )

ॐ तत्सद्ब्रह्मणे नमः ।

# सत्याषाढविरचितं श्रौतसूत्रम् ।

## महादेवशास्त्रिसंकलितप्रयोगचन्द्रिकाव्याख्यासमेतम् ।

अथ पञ्चदशप्रश्नः ।

तत्र प्रथमः पटलः ।

विनेययुक्ताखिलसिद्धवर्य-
लसच्चिदानन्दसुखं मुनीन्द्रम् ।
नमामि सूत्रार्थविदे मुदाऽहं
हिरण्यकेश्याख्यगुरुं कृपाब्धिम् ॥ १ ॥
गुरुं गणपतिं नौमि जन्मज्ञानप्रदौ तथा ।
सह गौर्या सोमनाथं नौमि विष्णुं च पद्मया ॥ २ ॥
अश्वमेधं ब्रह्ममेधं सर्वमेधं चतुर्दशे ।
प्रश्ने पञ्चदशे यज्ञप्रायश्चित्तमथोच्यते ॥ ३ ॥

उक्तानि द्वादशाहादर्वाञ्चि नित्यानि कर्माणि यानीह हविर्यज्ञसोमयज्ञराजसूयाश्वमेधान्तान्व्याचख्युराचार्याः । तेषामिदानीं प्रायश्चित्तप्रवचनमारभ्यते—

**श्रुतिलक्षणं प्रायश्चित्तं विध्यपराधे विधीयते ॥ १ ॥**

श्रुतौ लक्षणमात्रमेव प्रायश्चित्तं तस्योपदिश्यते । श्रुतिलक्षणप्रायश्चित्तमिति श्रूयते । श्रुतिर्वेदः । यस्यैव विधित्वाद्येन लक्ष्यते ज्ञायते तल्लक्षणं श्रुतौ लक्षणं यस्य तदिदं श्रुतिलक्षणमिति । श्रुताविति सप्तमीनिर्देशः । श्रुतौ किंचिदुक्तं न कृत्स्नोक्तिरिति । इतरथा श्रुतिलक्षणमित्येव स्यात् । किंपुनस्तत् प्रायश्चित्तम् । प्रायो विनाशः । कथं प्राय उ(यो)पदि(वि)ष्टो विनाशं कर्तुमात्मनः उपदि(वि)ष्ट इति लोके दर्शनात् । चिती संज्ञान इत्यस्माद्धातोश्चित्तमनेकार्थत्वाद्धातोः संधानं चित्तमित्युच्यते प्रायश्चित्तं विनष्टस्य कर्मणः संधानं प्रायश्चित्तमित्युच्यते । चित्तिचित्तयोः सुडागमो लक्षणकृत इति प्राय-

शब्दस्य विनाशपर्यायस्याकारान्तत्वाच्चित्तिचित्तयोः सुडागमेन प्रायश्चित्तमिति रूपसिद्धिः। लक्षणाच्च सुडागमो गणसूत्रवृत्तिकारेण प्रायस्य चित्तिचित्तयोः सुडस्कारो वेति पठितत्वात्। श्रुतौ लक्षणं प्रायश्चित्तस्योपदिष्टमिति पिण्डितार्थः। तत्र चोदयति सर्वकर्मसु श्रुतिलक्षणेषु प्रायश्चित्तम्, स्मृतिलक्षणमिति न वक्तव्यम्। तत्र परिहारः—अन्यानि कर्माणि श्रुतिलक्षणानि भवन्ति प्रायश्चित्तमेव श्रुतिलक्षणमित्येवमुच्यते। कस्तर्ह्यर्थः। श्रुतौ लक्षणमात्रं प्रायश्चित्तस्योपदिश्यते। चिह्नमात्रं यथा पुरोडाशः क्षायतीति। क्षायो दाहः। तल्लक्षणं प्रायश्चित्तस्य क्षायतीत्यत्र द्वयोर्बहूनां क्षाये प्रायश्चित्तम्। नैकस्यैव हविषः क्षाये। यद्यष्टो(ष्टा)पदि(दी)त्यवबुध्येतेत्यत्र द्वादशपद्यां षोडशपद्यां वा प्रायश्चित्तसामान्यमात्रे नैमित्तिकं भवति। विध्यपराधे विधीयत इति कर्मविधिः। अपराधोऽन्यथा क्रिया, विधेरपराधो विध्यपराधः। तस्मिन्विध्यपराधेऽन्यथा भावे प्रायश्चित्तं विधीयते। यथा—यस्यानो वा रथो वाऽन्तराऽग्नी यातीत्यविधानेनान्तरागमनेन प्रायश्चित्तम्। यत्र तु विधिर्न तत्र प्रायश्चित्तं विहितत्वात्। यागार्थगमने च न प्रायश्चित्तम्। अथवा श्रुतिलक्षणं प्रायश्चित्तं विध्यपराधे विधीयत इत्येतदेकं सूत्रम्। अर्थविशेषश्चान्य इति पूर्वसूत्रभेदमाश्रित्य पूर्वसूत्रेण श्रुतौ लक्षणमात्रमुक्तं न यावदपेक्षितमुक्तम्। द्वितीयसूत्रेण विहितस्य पुरुषवृ(कृ)त्यापराधे प्रायश्चित्तं न विधानान्तरेण विहितस्यान्यथाभावे भवतीति। इदानीमेकसूत्रत्वमाश्रित्योच्यते। विधीयते ब्राह्मणेनेति कर्म विधिस्तस्यापराधेऽन्यथाक्रियायां श्रुतिलक्षणं विधीयते न स्मृतिलक्षणं विधानसामर्थ्यात्। यत्र ह्युभयस्य प्राप्तिः कर्ममध्येऽपि स्मृतित्वलक्षणं प्रमाणम्। आचमनवत्कर्माङ्गत्वेन वेदमूलस्मृतिदर्शनात्तत्रैवम्। ब्रह्मौदनार्थं औपासनं सर्वं निर्मन्थ्यं वेति त्रयः पक्षाः। औपासनैकदेशं वा स्थापनीयं सर्वमौपासनं वा स्थापनीयम्। अथवा तौ विना निर्मन्थ्यं वा स्थापनीयम्। तत्रानुगमने विषयमाह—औपासनैकदेशपक्षे पाकात्पूर्वमनुगतश्चेत् पुनरौपासनैकदेशमाहृत्याऽऽदधातीति। सर्वप्रायश्चित्तमनाम्नातत्वात्। पाकादूर्ध्वमनुगतश्चेत्पुनरेकदेशमाहृत्य पुनः पाकं कृत्वा न वरदानं न प्रायश्चित्तम्। सर्वमौपासनपक्षे पाकात्पूर्वमनुगतश्चेदौपासनानुगमनप्रायश्चित्तं स्मृतिविहितम्। अयाश्चेति संधानं कृत्वा सर्वमाहृत्य स्थापनीयम्। पाकादूर्ध्वमनुगतश्चेत्पूर्ववत्संधानविधिना संधाय स्थापनीयम्। निर्मन्थ्याग्निपक्षे पाकात्पूर्वमनुगतश्चेत् पुनर्निर्मन्थ्य स्थापनीयम्। पाकादूर्ध्वमनुगतश्चेत् पुनर्निर्मन्थ्यं स्थापयित्वा पाकः कर्तव्यः सर्वप्रायश्चित्तम्। द्वितीयाधानादिष्वौपासनैकदेशपक्षे तद्देशमाहृत्येत्यादिसर्वमौपासनपक्षे तन्तुमति पथिकृतं च कृत्वा स्थापनीयम्। निर्मन्थ्यपक्षे लौकिकारणिद्वयमाहृत्य मथित्वा तमाहृत्य स्थापनीयम्। यस्य तु सर्व आहितस्तस्य श्रोत्रियागारादाहृतमपि द्वितीयाधानादिषु स्थापनीयम्। बहुपत्नीकश्चेत् स्मार्तविधिनौपासनाग्निं संसृज्य तस्यैकदेशं सर्वं वा निधायाऽऽधानं कर्तव्यम्।

सर्वाधानपक्षे स्मार्तकर्मणां लोप एव श्रौतेन चारितार्थत्वात् । अग्नौकरणादि केचिल्लौकिकानले कुर्वन्ति । दक्षिणाग्नौ पैतृकं कर्म क्रियत इति निर्देशात्, अग्नौकरणादि तत्रैव विध्यपराध इति वचनात्पुरुषापराधे तु श्रौतस्मार्तप्रायश्चित्तं भवति ॥ १ ॥

यथा पर्याहितानामेककार्याणां यूपादीनां विकल्पो द्रष्टव्यः । खदिरपलाशादीनामिहाप्येकनिमित्तानां विकल्पः स्यादत इदमुच्यते—

**एकस्मिन्दोषे श्रूयमाणानि समभ्युच्चीयेरन्प्रायश्चित्तान्यर्थान्तरसंयोगात् ॥ २ ॥**

एकस्मिन्दोष एकस्मिन्निमित्ते यानि विधीयन्ते प्रायश्चित्तानि समुच्चीयन्ते । तानि यथा—अग्निहोत्रस्कन्दने—अस्कान्द्यौः पृथिवीमित्यभिमन्त्रणम् । उपसर्गे—उन्नं भय पृथिवीमिति । अनशनमाहूतः सायं नाश्नीयादिति समुच्चय एतेषां भवतीति । किं कारणम् । अर्थान्तरसंयोगात् । अर्थादन्यदर्थान्तरम् । अर्थान्तरस्य भावोऽर्थान्तरत्वम् । तस्मादर्थान्तरयोगात् । अर्थान्तरप्रयोजनं प्रयोजनादन्यत्वादित्यर्थः । अन्यत् प्रयोजनमभिमन्त्रणेनान्यदुपसर्गेणान्यच्चानशनेनातः समुच्चय इति । यद्यपि दोषनिर्घातप्रयोजनमेकं तदाऽप्येकस्मिन्निमित्तेऽनेकप्रायश्चित्तोपदेशाद्विकल्पस्य चान्याय्यत्वाद्दोषनिर्घातार्थश्च । तेन चावान्तरप्रकारभेदेन साधनतया समुच्चयोपपत्तेः पाक्षिकत्वमन्याय्यमिति समुच्चयः । यथा लोके—अक्षामयेऽक्षिदोषोऽन्योऽञ्जनेन हन्यतेऽन्यो न वाऽन्येनान्यो निपातशयनेनेति रोगपरिहारप्रयोजनैक्येऽपि अवान्तरकार्यभेदो यथा तद्वद्दोषनिर्घातादर्थत्वेऽपि समुच्चयः । उपदेशो यथार्थवादो नार्थान्तरभावो न भवति एकार्थतैव तत्र विकल्पो भवति, न समुच्चय इति । साक्षाद्व्रीहियवादिवदेककार्यतया श्रवणाभावेऽपि अर्थवादादेव प्रयोजनदायत् प्रागवगम्यते तत्रापि विकल्पो युक्तः । यथा पथिकृद्यागः स्वर्गफलप्रतिपत्त्यर्थो वैश्वानरोऽपि तथैव । ततस्तयोर्विकल्प इति समुच्चयो न न्यायः । अदृष्टदोषोभयोरुपदेशादुभाभ्यामेव हन्यत इति । अवान्तरकार्यभेदा इति प्रागेवोक्तम् । यस्तु शाखान्तरस्थो विधिरेकेषामित्युच्यते । तत्रापि विकल्प एवाधिकविधेरनित्यत्वादिति । एकशाखीयप्रयोगोपदेशे शाखान्तरीयांशोपसंहार एकेषामिति न वक्तव्यम् । ततो यत्रैकेषामिति निर्देशस्तु तत्र विधीयमानप्रयोगादधिकधर्मोपदेश इत्यवगमादनित्यत्वादतः समुच्चयत्वम् । दर्शपूर्णमासातिपत्तौ पाथिकृती वैश्वानरी च विहिते तयोः समुच्चयः यत्र सामान्यविशेषभावस्तत्र सामान्यस्य विशेषेण बाधः । यथा—आहवनीयानुगमने सामान्येन ज्योतिष्मतीष्टिर्विहिता । अन्वाधाने कृत आहवनीयानुगमन आहुत्यन्तरं विहितं तत्र बाधः । यथा देवाञ्जनमगन्यज्ञ इत्येकेषामिति तत्राप्यदृष्टकार्यत्वात्समुच्चयसंभवेऽपि विकल्प एवं मतान्तरत्वेनोपन्यासात् ॥ २ ॥

तत्र त्रिविधं प्रायश्चित्तमाह —

जपो होम इज्या च ॥ ३ ॥

चेतिप्रकारवचनः । अन्यान्यप्यनुमन्त्रणोपस्थानोपसमिन्धनपुनराधानादीनि संगृह्णाति। तेषामपि प्रायश्चित्तत्त्वेन वक्ष्यमाणत्वात् । त्रितयोदाहरणं तु तेषां प्राधान्यख्यापनार्थं बाहुल्याभिप्रायं चेति द्रष्टव्यम् ॥ ३ ॥

सन्त्वेतानि प्रायश्चित्तानि समुच्चीयन्तां चार्थान्य(न्तर)त्वात् । कस्मै पुनरर्थाय तानि क्रियन्ते । अत आह—

दोषनिर्घातार्थानि भवन्ति ॥ ४ ॥

कर्मणो वैगुण्यमित्युक्तम् । तन्निर्घातेन कर्मण उपकुर्वन्ति, कार्यशक्तिमविकलां कुर्वन्तीत्यर्थः । कथं पुनरेतेषां तादर्थ्यमिति चेत्, एतस्मिन्वैगुण्य एतत्कर्तव्यमित्युक्ते तत्समाधानस्यापेक्षितत्वाद्वैगुण्यपरिहारार्थमेव तदवसीयत इति भावः ॥ ४ ॥

अस्त्वेषां दोषनिर्घातः फलं कालोऽप्येषां व्याकरणीयः । किं कर्मकाल एव कर्तव्यानि, उतापवृत्ते कर्मणि आहोस्विदिष्ट्यादेः पर्वाद्यपेक्षत्वात्स स कालः प्रतीक्षणीय इति । तत्राऽऽह—

अनन्तरं दोषात्कर्तव्यानि ॥ ५ ॥

क्षतादिचिकित्सावदनन्तरं दोषादेतान्यनुष्ठितान्येव दोषं निर्हण्युर्नान्यथेति भावः । एतेन प्रायश्चित्ताधानस्याप्यृतुनक्षत्राद्यनपेक्षत्वं व्याख्यातम् ॥ ५ ॥

निर्हते पुनर्दोषे कृत्स्नं कर्म ॥ ६ ॥

एवं प्रायश्चित्तेन निर्हते दोषे ततः कर्मशेषः कार्य इत्यर्थः । यदप्यकृतमयथाकृतं वा सत्कृते प्रायश्चित्तेऽङ्गं प्रधानं वा तदपि यथा क्रियेतेत्युक्तं कृत्स्नमिति तत्राङ्गमपवृत्ते कर्मणि न क्रियते, प्रधानानुपकारात् । द्रव्यसंस्कारस्तु परतो द्रव्योपयोगान्न क्रियते तदर्थत्वात् । प्रधानमप्यपवृत्तकाले न क्रियतेऽकाले कृतस्याकृतत्वात् । गौणकाले तु क्रियत एव मुख्याभावे गौणस्यापि ग्राह्यत्वात् । तेनार्वाक्परपर्वणः । क्रियैव दर्शपूर्णमासयोः । तच्च परस्ताद्दर्शयिष्यामः । केचित्तु व्याचक्षते निर्हते दोषे पुनः कर्म कृत्स्नं भवति सकलं भवति फलदानसमर्थं भवतीति ॥ ६ ॥

ननु निर्हतदोषमपि कर्म दोषागमविकलशक्तिकं सत्कथं कार्याय कल्पयिष्यते । नहि शल्यप्रवेधात्पादेन खञ्जः सन्नुत्खातशल्योऽपि पन्थानं प्रतिपद्यते । तेन प्रयुक्तस्य कर्मणोऽपार्थकत्वात्पुनः प्रयोगेण भवितव्यम् । अत आह—

**तस्य नावचनात्पुनः प्रयोगः ॥ ७ ॥**

तस्य सकृत्प्रयुक्तस्य कर्मणो नर्ते वचनात्पुनः प्रयोगो भवति । भवत्येव तु वचनाद्यथा— 'अन्यां दुग्ध्वा पुनर्होतव्यम्' अथान्यामिष्टिमनुल्बणां तन्वीतेत्यादौ । को ह्यदृष्टार्थस्य कर्मणः कार्याकार्यते शक्यशक्ती वा जानीयात् । न खल्वन्धो रूपविशेषान्पश्यति । तस्माद्यस्य शास्त्रमेव पुनः प्रयोगं शास्ति कामं तत्र प्रयोक्ष्यते प्रत्येष्यते च तस्य पङ्गोरिव कार्या(र्य)शक्तिः । यत्र तु न शास्त्रमस्ति, कुतस्तत्र पुनः प्रयोगः । प्रत्येष्यते तु तत्र प्रत्युक्तस्यैव कर्मणाश्चिकित्सितपटलस्येव चक्षुषः कार्यशक्तिरित्यलं प्रसङ्गेन ॥ ७ ॥

**तुभ्यं ता अङ्गिरस्तमेत्यन्वाहिताग्निः प्रयास्यञ्जुहुयात् ॥ ८ ॥**

यद्यन्वाहिताग्निर्देशविप्लवाद्यावश्यकनिमित्तवशात्सगृहः प्रयास्यन्स्यात् तदा तुभ्यमित्यनयाऽऽहवनीये जुहुयात् । वास्तोष्पतीयप्रत्याम्नायः ॥ ८ ॥

**पृथगरणीष्वग्नीन्समारोप्य प्रयाति ॥ ९ ॥**

अरणिवचनात्नाऽऽत्मनि समारोप्याः ॥ ९ ॥

**यत्र वसेत्तदेतामिष्टिं सꣳस्थापयेत् ॥ १० ॥**

यत्र वत्स्यति तत्रावसितहोमान्तं कृत्वा कृतान्तात्प्रक्रम्येष्टिः संस्थाप्या ॥ १० ॥

**यद्यन्वाहिताग्नेराहवनीयोऽनुगच्छेदन्यमग्निरुपसाम-**
**प्रमरुयदित्यन्यं प्रणीय यो अग्निं देव वीतये हवि-**
**ष्मा२ आ विवासति । तस्मै पावक मृडय**
**स्वाहेति स्रुवाहुतिं जुहोति ॥ ११ ॥**

पूर्णं स्रुवं सर्वप्रायश्चित्तं हुत्वा, इदं विष्णुर्विचक्रम इत्याहुतिं जुहुयात् ( आप० श्रौ० ९–१–११ ) इत्यापस्तम्बः । जुहूनिवृत्त्यर्थं स्रुवग्रहणम् । वैष्णवीं तु जुह्वा जुहुयाद्यद्यन्व्यापृता भवति ॥ ११ ॥

**यः कश्चनानुगच्छेदेतदेव प्रायश्चित्तम् ॥ १२ ॥**

तं तमनुगतं योनित उत्पाद्य भूरित्युपस्थानादि समानम् । होमावपि तत्र तत्रैवेति भाष्यकृत् । आहवनीय एवेति वैखानसः ॥ १२ ॥

**मथित्वा गार्हपत्यम् ॥ १३ ॥**

गार्हपत्यमनुगतं मन्थनेनोत्पाद्य यथोक्तमेव प्रायश्चित्तमावर्तयेत् । तथाऽऽहवनीयस्यापि गार्हपत्यतामापन्नस्य मन्थनमेव न प्रणयनं यथोर्ध्वमौत्तरवेदिकप्रणयनात्पशुसोमयोः ॥ १३ ॥

प्रणयनवर्जमावर्तेत ॥ १४ ॥

यथा दक्षिणाग्न्यनुगतिप्रायश्चित्तं प्रकृत्याऽऽह भरद्वाजः—अन्वाहार्यपचने जुहुयादित्याश्मरथ्यः । आहवनीय इत्यालेखन इति । केचित्त्वाहवनीयानुगतावप्यजस्रविषये प्रणयनवर्जमावर्तयन्ति तस्य गार्हपत्यानुप्रवेशान्मन्थनमेव सर्वत्रेति । तदयुक्तम् । अविशेषात् । उद्धार्यस्यापि गार्हपत्यानुप्रवेशे प्रमाणाभावस्य दर्शितत्वाच्च । अस्तु वा तदनुप्रवेशस्तदा तमेवाजस्रोऽप्यनुप्रविशन्न दण्डेन पराणुद्यते योनित्वादेरनुप्रवेशहेतोस्तत्रात्यविशेषात् । वाच्यो वा विशेषः । तस्मात्प्रणयनविधिष्ववशिष्टमेव प्रणयनमजस्रोद्धार्ययोः ॥ १४ ॥

या प्रकृतिर्दक्षिणाग्नेः ॥ १५ ॥

तत आहरेदिति शेषः । प्रदर्शनार्थं चैतत्सभ्यावसथ्ययोरपि यः कश्चनानुगच्छेदिति सामान्योपक्रमात् । अन्यथा तस्याऽऽनर्थक्यप्रसङ्गाच्च । तदभिप्रायमेव चानयोरननुक्रमणं वेदितव्यम् । अनित्यत्वाभिप्रायमित्यपरे । तदेतदन्वाहितप्रायश्चित्तं स्वविषये सर्वमाग्निहोत्रिकादिप्रायश्चित्तान्तरं बाधते, विशेषविषयत्वात् । यस्य चोभावनुगतावित्यनेन तु सर्वो विधिर्बाध्यते, विशिष्टतमविषयत्वात्तस्य । सर्वेऽपि ह्यनुगतप्रायश्चित्तविधयोऽन्वाहितानन्वाहितादिगोचरा एकैकानुगतावभिनिम्रोकाभ्युदयराहितोभयानुगतौ च सावकाशाः । तद्विशिष्टोभयानुगतौ युक्तं तदेकविषयेणानेन बाध्यत इति ॥ १५ ॥

भूरित्युपतिष्ठेत ॥ १६ ॥

स्पष्टम् ॥ १६ ॥

मनसा व्रतोपायनीयं यजुर्जपेत् ॥ १७ ॥

यजमान इति शेषः । व्रतोपायनीयमिति वचनाद्व्रतं चरिष्यामीति ( तै० सं० १–५–१० ) च मन्त्रलिङ्गात् । 'संततिर्वा एषा यज्ञस्य' ( तै० ब्रा० ३–७–२ ) इत्यादिना विच्छिन्नव्रतसंतानार्थत्वस्तवनाच्च व्रतोपायनीयमिति स्वस्य यद्व्रतोपायनार्थं यजुस्तज्जपेदित्यर्थः ॥ १७ ॥

इदं त एकं पर उत एकं तृतीयेन ज्योतिषा
संविशस्व संवेशनस्तनुवै चारुरेधि प्रियो
देवानां परमे जनित्र इत्यन्वाहिताग्नेरग्निमपक्षा-
यन्तमा शम्योपरासात्संभरेत् ॥ १८ ॥

अन्वाहिताधिकारशङ्कानिवृत्त्यर्थमाहिताग्निग्रहणम् । यावति देशे शम्या परास्ता पतति ततोऽर्वाग्यद्यग्निः कश्चिदपक्षायेत्, आयतनादपगच्छेत् । तदा तमेव त्रिः परीत्य संभरेत्पुनरायतने निक्षिपेत् । तदुक्तमापस्तम्बेन—शम्यापरासात्परि वाजपतिः कविर॰

ग्निरिति त्रिः प्रदक्षिणं परिक्रम्य तꣳ संभरेदिदं त इति । कृत्स्नाग्न्यपक्षाण एव चायं विधिः । यथोक्तं बाह्वृच्याश्वलायनयोः— 'आहवनीयमवदीप्यमानमवोक्श्शम्यापरासादिति । अग्न्येकदेशापगमे तु यदि पुरा प्रयाजेभ्यो बहिः परिध्यङ्गारः स्कन्देत्' इत्यादिविध्यन्तरं द्रष्टव्यम् ॥ १८ ॥

परस्तराꣳ शम्यापरासादपक्षायन्तमनु प्रयायान्ववसाय यजेत ॥ १९ ॥

परःशब्दोऽत्यन्तसंनिकर्षे वर्तते । शम्यापरासात्परतरमपगच्छेद्यत्र सोऽग्निस्तत्रेतरानपि प्रत्यक्षान्नीत्वा तदनुगुणान्विहृत्य तदहस्तत्र वसेत् ॥ १९ ॥

अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् ॥ २० ॥

यत्र वसेत्तत्रेत्यर्थः ॥ २० ॥

पथोऽन्तिकाद्बर्हिराहरेत् ॥ २१ ॥

पथः समीपे ये दर्भास्ततो बर्हिराहरेत् ॥ २१ ॥

अनड्वान्दक्षिणा ॥ २२ ॥

यदा त्वियमिष्टिस्तन्त्रमध्ये पतिता तस्यैव प्रसङ्गो वेदितव्यः ॥ २२ ॥

श्वोभूते गृहेषु प्रत्यवस्येत् ॥ २३ ॥

ततः श्वोभूते यतो देशात्पूर्वं गतस्तेष्वे प्रत्यवस्यति । सोमेषु त्ववभृथान्तप्रत्यवसाने च न भवतो यत्राहर्वृद्धिः स्यात् ॥ २३ ॥

यस्य हविषे वत्सा अपाकृता धयेयुर्वायव्यां यवागूं निर्वपेत् ॥ २४ ॥

यदा सर्वगवीनां वत्साः सर्वमेव पयः पिबेयुर्न तु हविषे पर्याप्तमवशेषयेयुस्तदा यवागूं निर्वपेत् । शिथिलतण्डुला यवागूः ॥ २४ ॥

सा दोहयमाने प्रतीयात् । अन्यतरस्मादपाकृता धयेयुः ॥ २५ ॥

यद्यपि सांनाय्यस्थानापत्तेस्तद्धर्मिका यवागूस्तथाऽप्योषधिगुणत्वान्निर्वापादयः श्रपणान्ता धर्माश्चरुवत्कार्याः । ये हविर्निष्पत्त्यर्था भवन्ति । सांनाय्ये विहितास्त्वर्थलोपान्निवृत्ता न शास्त्रात् । अतोऽत्रार्थवत्त्वात् क्रियन्ते । उद्वासनादारभ्य सांनाय्ययोर्यतरस्थानापन्ना तद्धर्मा भवति । पृथक्प्रदाना च नानादेवतात्वात् । 'यदा तूभयोरपि दोहयोः पयो पीतं स्यात्तदा सह प्रदानं यवाग्वोरेकदेवतात्वात् । आह च भरद्वाजः— समानदेवतेषु समवदाय प्रचरति हविर्गणेषु पशुगणेषु चेति ॥ २६ ॥

**अथोत्तरस्मै हविषे वत्सानपाकृत्योपवसेत् ।। २६ ।।**

संस्थाप्येष्टिं तदहरेवोपवसथं कृत्वा पीतेन हविषा पुनर्यजेतेत्यर्थः । नाऽऽग्नेयस्याऽऽवृत्तिः । नाशदोषाद्यभावतः—'उत्तरस्मै हविषे वत्सानपाकृत्य' ( तै० ब्रा० ३-७-२ ) इति लिङ्गाच्च । एवं दोहान्तरस्याप्यनष्टस्येति द्रष्टव्यम् ॥ २६ ॥

**यस्य सायं दुग्धं हविरार्तिमार्च्छतीन्द्राय व्रीहीन्निरुप्योपवसेत् ॥ २७ ॥**

आर्तिर्नाशदोषापहारादितः । इन्द्रग्रहणं महेन्द्रस्यापि प्रदर्शनार्थम् । प्रातर्दोहेनास्य समवदाय प्रचरेत्, इत्यविशेषवचनादन्यथा महेन्द्रयाजिनस्तत्र याज्यानुवाक्यादिविरोधात् । तथैन्द्रं वा माहेन्द्रं वा पुरोडाशं तस्य स्थाने बह्वृचाः । व्रीहिग्रहणाद्यवा निवर्तन्ते । यदा रात्रावार्तिस्तदा यावदर्थं पात्राणि प्रयुज्य निरुप्य व्रीहीनुपवसेत् । यदा तु श्वस्तदा त्वनन्तरमेव निरुप्य नोपवासः ॥ २७ ॥

**यत्प्रातः स्यात्तच्छृतं कुर्यात् ॥ २८ ॥**

यत्प्रातरदुष्टं स्यात्तच्छृतमेव कुर्यात् न तु सांनाय्यप्रतिनिधित्वेन पुरोडाशः प्रवृत्त इति सोऽपि [न] पुरोडाशः कार्य इति भावः ॥ २८ ॥

**अथोत्तर ऐन्द्रः पुरोडाशो भवति ॥ २९ ॥**

इतरो दोहः पुरोडाशः स्यात्तस्य स्थाने निरुप्तैर्व्रीहिभिः पुरोडाशः कार्य इत्यर्थः । सचैकादशकपालो द्वादशकपालो वा । ऐन्द्राग्नविकारत्वात् । तस्य च प्राग्गुद्वासनात्पुरोडाशधर्माः परतः सांनाय्यधर्माश्च पूर्ववदेव वेदितव्याः ॥ २९ ॥

**प्रातर्दोहेनात्र समवदाय प्रचरति ॥ ३० ॥**

समवदाय सहावदाय ॥ ३० ॥

**अथोत्तरस्मै हविषे वत्सानपाकृत्योपवसेत् ॥ ३१ ॥**

**एतदेव प्रातर्दोहस्याऽऽर्तिगतस्य प्रायश्चित्तम् ॥ ३२ ॥**

उपवासस्तत्रार्थान्निवर्तते ॥ ३१ ॥ ३२ ॥

**सायंदोहेनात्र समवदाय प्रचरति ॥ ३३ ॥**

अत्र ब्राह्मणे कल्पान्तरेषु चान्यतरदोहार्तावुभयार्तौ च पुनरिज्योक्ता । सूत्रकारस्तु तामुभयार्तावेव वक्ष्यति तेनान्यतरार्तौ नेष्यते । आश्वलायनस्त्वत्रानुग्रहमाह—यथा 'अन्यतरादोषे व्यासिच्य प्रचरेयुः पुरोडाशं वा तत्स्थाने' इति । बाह्वृच्येऽपि सायं दोहार्तावाम्नातोऽनुग्रहः—यथा प्रातर्दुग्धं द्वैधं कृत्वा तस्यान्यतरां भक्तिमातच्य तेन यजेत, इति ॥ ३३ ॥

**अथोत्तरस्मै हविषे वत्सानपाकृत्योपवसेत् ॥ ३४ ॥**

अथ यवागूनिर्वापादूर्ध्वमुत्तरस्मै हविषे परेद्युरनुष्ठेयस्य सांनाय्यस्य सिद्धये पुनरपि वत्सानपाकुर्यात्पृथक् कुर्यात् । अन्यद्गतम् ॥ ३४ ॥

**यस्य सायंप्रातर्दुग्धꣳ हविरार्तिमार्च्छेत्त्यैन्द्रं पञ्चशरावमोदनं पचेत् ॥ ३५ ॥**

उभयोः क्रमेणाऽऽर्तौ क्रमेण पुरोडाशौ निरुप्य सहप्रचारः पूर्ववत् । यदा पुनरनिरुप्तेऽन्यतरार्त्यर्थे पुरोडाशेऽन्यस्याप्यार्तिर्युगपदार्तिर्वा तदाऽष्टाकपालपञ्चशरावौ निर्वपेत् । तदस्य परिमाणमित्यर्थे लुप्ततद्धितः पञ्चशरावशब्दः पञ्चशरावपरिमितं द्रव्यमभिधत्ते । तच्च शरावेण निर्वपति त्रिर्यजुषा द्विस्तूष्णीं स द्वादशशरावं चरुं निर्वपति द्वादशभिर्मन्त्रैस्तूष्णीमितराणीति लिङ्गात् । इन्द्रग्रहणमत्रापि प्रदर्शनार्थम् । ऐन्द्रं वा माहेन्द्रं वेति समानमिति बह्वृचश्रुतेः । सांनाय्यप्रतिनिधित्वं च हविषोरत एव लिङ्गात्सिद्धम् । 'पयो वा ओषधयः । पयः पयः । पयसैवास्मै पयोऽवरुन्धे' (तै० ब्रा० ३-७-१) इति लिङ्गाच्च । तेन सांनाय्यधर्मकताऽपि तयोः पूर्ववदेव वेदितव्या । कात्यायनस्तु पञ्चशरावं प्रकृत्याऽऽह— 'प्रतिनिधिः प्रायश्चित्तं वा देवताश्रुतेः' इति । प्रायश्चित्तार्थत्वे परतोऽप्युद्वासनाग्नेयैन्द्राग्नधर्मता हविषोरिति विशेषः । यवाग्वादीनां तु प्रतिनिधित्वं प्रदर्शितमेव सूत्रे स्पष्टमिति सांनाय्यधर्मतैव यथोक्ताऽनुसंधेया ॥ ३५ ॥

**अग्निं प्रथमं पुरोडाशेन यजेत ॥ ३६ ॥**

देवतायास्तद्धितेनैव सिद्धेरुत्तरविकल्पार्थोऽनुवादः ॥ ३६ ॥

**उत्तरमिन्द्रं पञ्चशरावेण ॥ ३७ ॥**

पञ्चशरावमेवैकमिन्द्राय निरुप्य तेनैव प्रथममग्निमिष्ट्वा तत इन्द्रं यजेत, न त्वष्टाकपालं पुरोडाशं निर्वपेदित्यर्थः । ब्राह्मणे ह्यैन्द्रं पञ्चशरावमोदनं निर्वपेदग्निं देवतानां प्रथमं यजेत इति यागविधिरेवाग्नेरष्टाकपालस्य कल्पक इति प्रथमः कल्पः । ऐन्द्रादेव पञ्चशरावादग्नेर्वाचानिको याग इति द्वितीय इति द्रष्टव्यम् । उभयत्र चाऽऽग्नेययोः सहप्रदानमिष्यते विभवात् ॥ ३७ ॥

**अथोत्तरस्मै हविषे वत्सानपाकृत्योपवसेत् ॥ ३८ ॥**

व्याख्यातः ॥ ३८ ॥

**यस्य व्रत्येऽहन्पत्न्यनालम्भुका भवति तामपरुध्य यजेत ॥ ३९ ॥**

व्रतार्हमहो व्रत्यमहस्तच्चौपवसथ्यम् । तत्रैव व्रतोपदेशात्तस्मिन्नहनि यदि पत्न्यार्तववशादनालम्भुका स्पर्शानर्हा स्यात्तदा तामपहाय यजेतैव, दर्शपूर्णमासाभ्यामित्यर्थः । अथवा व्रतशब्दः कर्मवाची यथा शिक्षति व्रतेनेत्यादौ । तत्प्रतिनियतमहर्व्रत्यमहः ।

तस्मिन्ननालम्भुकायामपि पत्न्यां तया विना कुर्यादेव तत्कर्मेत्यर्थः । तद्यथा पर्वणो दर्शपूर्णमासौ, अमावास्यायां पिण्डपितृयज्ञः सायंप्रातरग्निहोत्रमित्यादि । अत्येऽहनीति वचनाद्येन प्रतिनियतं तत्तत्रानालम्भुकायां क्रियते । एतदुक्तं भवति यस्मिन्काले यस्यां क्रियायां प्रत्यवायः प्रायश्चित्तं वा भ्रश्येच्च मुख्यः कालस्तत्रानालम्भुकायामपि क्रियते नेतरदिति । तेन काम्येष्टयः पशुसोमाश्च यस्मिन्पर्वण्यनालम्भुका न तस्मिन् क्रियन्ते । क्रियन्त एव तस्मिन्यदा प्रक्रान्ता भवन्ति । प्रक्रान्तस्य कर्मणस्तत्कालं प्रतिनियमात् । एतेनान्याधेयादेरपि प्रक्रान्तस्य तत्कालापवर्गो व्याख्यातः ।

सोमे तु प्रक्रान्तेऽनालम्भुकायां नियमविशेषानाह कात्यायनः—'पत्न्युदक्या दीक्षारूपाणि नि(वि)धाय सिकतास्वासीतोपस्रवणात्तिष्ठेत्संधिवेलयोर्वेदिसमीपे सुत्यासु त्रिरात्रान्ते गोमूत्रमिश्रेणोदकेन स्नापयित्वा परिधानादि करोति संनिपातिकम् । प्रजातायाश्च दशरात्रादूर्ध्वं स्नानादि, न गर्भिणीं दीक्षयेदित्येके । अयज्ञिया गर्भा इति श्रुतेः । नानूबन्ध्या प्रकरणादिति ।

प्रजातायां तु सत्यप्याशौचे यजमानस्याग्निहोत्रादावधिकार उक्तो धर्मशास्त्रकारैः । बौधायनस्तावत् 'नाशुचिः काम्यं तप आतिष्ठेन्न यजेत न स्वाध्यायमधीयीतान्यत्राग्निहोत्रदर्शपूर्णमासेभ्यः' इति । मनुनाऽप्युक्तम्—

न वर्धयेदघाहानि प्रत्यूहेन्नाग्निषु क्रियाः ।
न च तत्कर्म कुर्वाणः सनाभ्योऽप्यशुचिर्भवेत् ॥ इति ।

याज्ञवल्क्योऽप्याह—वैतानोपासनाः कार्याः क्रियाश्च श्रुतिचोदिताः । इति । तथा नित्यानि निवर्तन्ते वैतानवर्जम्, इति गौतमः । जाबालिश्चाऽऽह—

जन्महान्योर्वितानस्य कर्मत्यागो न विद्यते । इति ।

एतेन जातेष्टिरपि व्याख्याता । तत्र त्वाह भरद्वाजः—कथं जातेष्टिरित्यूर्ध्वं दशम्या इत्याश्मरथ्यो जात एवर्त्विजः कुर्यादित्यालेखन इति । बौधायनश्चाऽऽह—सहस्माऽऽह बौधायन उत्थितायां निर्दशायां निर्वपेदिति जातमेव विदित्वेति शालीकिः इति ॥ ३९ ॥

उदकशुल्वꣳ स्तृणीयात् ॥ ४० ॥

योक्त्रं तु स्वकाले दक्षिणतः पाशमुदक्शुल्वं जघनेन वेदिमन्तर्वेदि वेत्यापस्तम्बः । पश्चाद्वेदेरन्तर्वेदि वा तूष्णीं निदध्यात् ॥ ४० ॥

तामिष्ट्वा त्रिरात्रे स्नातामुपह्वयेत ॥(ख० १)॥ अमूहमस्मि सा त्वं द्यौरहं पृथिवी त्वꣳ सामाहमृक् त्वं तावेहि संभवाव सह रेतो दधावहै पुꣳसे

पुत्राय वेत्तवै रायस्पोषाय सुप्रजास्त्वाय सुवीर्यायेति । अर्ध एवैनामुपह्वयते सैव ततः प्रायश्चित्तिः ॥ ४१ ॥

यदेयमतिगतत्रिरात्रा स्नाता स्यात्तदैनामृतुगमनार्थमुपह्वयेत तच्च कर्मण एव प्रायश्चित्तार्थं, न तु पुरुषार्थम् । कस्मात् ' अर्धो वा एतस्य यज्ञस्य मीयते । यस्य व्रत्येऽहन्पत्न्यनालम्भुका भवति, ( तै० ब्रा० ३–७–१ ) इति प्रकृत्य 'तामिष्ट्वोपह्वयेत । सैव ततः प्रायश्चित्तिः' ( तै० ब्रा० ३–७–१ ) इति श्रुतेः ॥ ४१ ॥

यदि सांनाय्यमग्निहोत्रं वा विष्यन्देत । यदि वा कीटोऽवपद्येत । मध्यमेन पलाशपर्णेनान्तमेन वोदक्परेत्य प्राजापत्ययर्चा वल्मीकवपायां विष्यन्दमानमवमनीय भूरित्युपतिष्ठेत ॥ ४२ ॥ मध्यमेनैव पलाशपर्णेन द्यावापृथिव्ययर्चाऽन्तःपरिधि कीटावपन्नमवनीय भूरित्युपतिष्ठेत ॥ ४३ ॥

कथनवशादुद्वृत्तस्याधः पतनं विष्यन्दनम् । व्याख्याता वल्मीकवपा । तामुद्धृत्य विवृतबिलां कृत्वा तस्या बिलेऽवनीय पुनर्जुहुयादग्निहोत्रम् । अदनयनापेक्षया पुनःशब्द आ( ब्दमा )वर्तयेत् । दोहनेन विनाऽन्यदागमयेदुत्पादयेत् । कीटोऽमेध्यसेवी क्रिमिः । अन्तःपरिधीति देशोपलक्षणमग्निहोत्रे ॥ ४२ ॥ ४३ ॥

यदि सांनाय्यमन्यदागमयेत् ॥ ४४ ॥

यदि दधनि पयसि वा कीटोऽवपद्येत तत्रान्यदागमयेत् । स्पष्टमन्यत् ॥ ४४ ॥

यद्यग्निहोत्रमन्यां दुग्ध्वा पुनर्जुहुयान्मित्रो जनान्कल्पयति प्रजानन्मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाऽभिचष्टे सत्याय हव्यं घृतवज्जुहोतेत्यभिवृष्टमग्निहोत्रꣳ हुत्वाऽन्यां दुग्ध्वा पुनर्जुहुयात् ॥ ४५ ॥

पुनरग्निहोत्रग्रहणात्सांनाय्ये नायं विधिः । यस्याग्निहोत्रमववर्षेदित्यापस्तम्बः । अववर्षेदुपरि वर्षेत्पर्जन्यः । तत्कृत्वा तदववृष्टं मैत्र्या हुत्वेत्यर्थः । स जुहुयान्मित्रो जनान् ( तै० ब्रा० १–७–२ ) इति श्रुतेः । ततोऽन्यां दुग्ध्वा होमः । केचित्तु—मित्रो जनानिति पूर्वाहुतिमन्त्रेणाग्निहोत्रं हुत्वा पुनर्होममिच्छन्ति । तदाऽप्यन्यां दुग्ध्वा पुनर्जुहुयात्, इति वचनाद्दोहहोमयोरावृत्तिः यत्तु पुरस्ताद्दोहस्योपरिष्टाच्च हुत्वोपस्पर्शनस्य तन्त्रं स्यात्तत्तन्त्रमेव भवत्युभयोर्विभवात् ॥ ४५ ॥

यदि पूर्वस्यामाहुत्या५ हुतायामुत्तराहुतिः स्कन्देत् पूर्वां चोत्तरयाऽभिहुत्य (भिजुहुयात्) यत्र वेत्थ वनस्पते देवानां गुह्या नामानि । तत्र हव्यानि गामयेति वानस्पत्ययर्चा समिधमाधाय तूष्णीमेव पुनर्जुहुयात् ॥ ४६ ॥

अभिहोम उपरिहोमः । तत एव शिष्टादेवोत्तराहुतिस्तूष्णीमुभयत्र । ततो होमावृत्तिः पूर्ववत् । यदा पुनरुत्तराहुत्येकदेशः स्कन्नो न सर्वाहुतिस्तदा तन्नाऽऽद्रियेत । यथा च वक्ष्यति यदनाहुतिमात्रं विप्रुडेव सेति मात्रापचारे तच्छेषेण समाप्नुयादिति च । पूर्वाहुत्या सहोत्तराहुतिपतनेऽप्ययमेव विधिस्तस्यापि फलतः स्कन्नत्वात्तत्तुल्यन्यायत्वाच्च ॥ ४६ ॥

यदि पूर्वस्यामाहुत्या५ हुतायामाहवनीयोऽनुगच्छेदग्निर्दारौ दारावग्निरिति वदन्ननन्तरे शकले हिरण्ये वा जुहुयात् ॥ ४७ ॥

यस्माद्दारोरुद्वायेदन्ततः सोऽनन्तरः शकलः । तस्मिंस्तत्स्थे हिरण्ये वा जुहुयात् । उत्तराहुतिमित्यर्थः । मन्त्रलिङ्गानुरोधात् । तथोत्तमे शकले हिरण्यं निधायेत्येव भरद्वाजः । वदन्निति वचनान्मन्त्रमध्ये होमः स्वाहाकारस्त्वन्तत एव भवति । ततः शेषसमाप्तिः । तत्र स्रुक्प्रतितपनमुपसमिन्धनं चाऽऽहवनीयस्यासंभवान्निवर्तते । प्रतितपननिवृत्तेरेवोद्देशनमपि निवृत्तं भवति । परिसमूहनादेस्त्वनिवृत्तिः शकलहिरण्ययोरग्निप्रतिनिधित्वेन विधानात् । यस्याप्यजस्र आहवनीयस्तस्यापि प्रतिनिधावेवाग्निहोत्रसमाप्तिरविशेषात् । ततो मन्थनम् ॥ ४७ ॥

यदि पुरा प्रयाजेभ्यो बहिष्परिध्याहवनीयात्प्राचीनमङ्गारो निवर्तेताध्वर्यवे च यजमानाय चाक५ स्यात् । यदि दक्षिणा ब्रह्मणे च यजमानाय चाक५ स्यात् । यदि प्रत्यग्घोत्रे च पत्नियै च यजमानाय चाक५ स्यात् । यद्युदङ्ङग्नीधे च पशुभ्यश्च यजमानाय चाक५ स्यात् । मा तमो मा यज्ञस्तमन्मा यजमानस्तन्नमस्ते अस्त्वायते नमो रुद्र पराय ते नमो यत्र निषीदस्यध्वर्यु मा मा हि५सीर्यजमानं मा हि५सीरिति त५ स्रुवस्य बुध्नेनाभिविदध्यात् ॥ यदि प्राचीनं निवर्तेतैवाग्नि-

तरासु दिक्षु ब्रह्माणं मा हिꣳसीर्यजमानं मा हिꣳसीरिति दक्षिणतो मन्त्रꣳसंनमाति ॥ होतारं मा हिꣳसीः पत्नीं मा हिꣳसीर्यजमानं मा हिꣳसीरिति पश्चात् । आग्नीध्रं मा हिꣳसीर्यजमानस्य पशून्मा हिꣳसीर्यजमानं मा हिꣳसीरित्युत्तरतः ॥ (ख०२) ॥ ४८ ॥

बहिष्परिधीति देशोपलक्षणम् । यदि पुरस्तादिति लिङ्गाद्ब्राह्मणे परिध्यग्रहणाच्च । तेनान्वाधानप्रभृत्या प्रयाजारम्भादयं विधिः । अन्यत्र तु तूष्णीमङ्गारं प्रहृत्य सर्वप्रायश्चित्तमेव । बुध्नो मूलम् । अभिनिदध्यात्, अभिपीडयेत् । मा तम इत्येतत्सर्वासु दिक्षु समुच्चीयते ॥ ४८ ॥

सहस्रशृङ्गो वृषभो जातवेदाः स्तोमपृष्ठो घृतवान्सुप्रतीकः । मा नो हासीन्मेत्थितो नेत्त्वा जहाम गोपोषं नो वीरपोषं च यच्छेत्येनमग्नौ प्रहरति ॥ ४९ ॥

स्पष्टोऽर्थः ॥ ४९ ॥

प्रहृत्य वाऽभिजुहुयात् ॥ ५० ॥

तूष्णीं प्रहृत्य मन्त्रेण वाऽभिजुहुयात् ॥ ५० ॥

यद्याहिताग्नेरग्निर्मथ्यमानः कालसंनिकर्षेण न जायेत यत्रान्यं पश्येत्तत आहृत्य विहृत्य हुत्वाऽत्वरमाणः पुनर्मन्थेत् ॥ ५१ ॥

प्रवासादौ समारूढोऽग्निरग्निहोत्रकालसंनिकर्षे यदि विहरणाय मथ्यमानो न जायेत तदा लौकिकाग्निमाहृत्य गार्हपत्यायतने निधाय विहृत्य जुहुयात् । तथा च बौधायनः— 'अथारण्योः समारूढेषु मथित्वाऽग्नीन्विहृत्य जुहुयात् । अपि वा लौकिकमाहृत्य विहृत्याग्नीनन्तराऽरणिं निधाय जुहुयात्' इति । आश्वलायनेनापि—अग्निहोत्राय कालेऽग्नावजायमान इति वदता समारूढविषयत्वमेवास्य विधेः ख्यापितम् । न ह्यनुगतोऽग्निरग्निहोत्राय मथ्यते, अपितु सर्वकामार्थं समारूढस्तु कदाचिदग्निहोत्रायैव मथ्यते प्रवासादाविति युक्तं तद्विषयत्वम् । तत्राजस्राग्नेर्बहुषु समारूढेषु य एवाग्निर्मथ्यमानो न जायते स एवाऽऽहर्तव्यः । एवं विहरणकालप्रभृत्या होमकालादयमेव विधिः । अनुगतिविषये तु केवलगार्हपत्यानुगतावुभयानुगतौ च मथ्यमानस्याजन्मनि यो विधिः स यस्य

वोभावनुगतावित्यत्रैवं दर्शितः । अन्यत्तु मतम् । 'मथ्यमानम्' इत्यविशेषवचनादनुगतिविषयेऽपि समानोऽयं विधिः । कालसंनिकर्ष इति च प्राधान्याद्धोमकालसंनिकर्षो गृह्यते । तेनानुगतिविषयेऽपि होमकालातिपत्तौ यस्याऽऽहवनीय इत्यादिविधिना मथ्यमानस्याजन्मनि भवत्येवायं विधिः । अनासत्तौ तु होमकालस्य यथाविहितप्रायश्चित्तान्येव भवन्तीति । आगामिकालविप्रकर्ष एवात्वरमाणो मन्थेत् , अन्यथा पुनरनुकल्पः प्रसज्येत । न च तच्छक्तिविषये युक्तमिति भावः ॥ ५१ ॥

अन्यमविन्दन्नजाया दक्षिणे कर्णे जुहुयात् ॥ ५२ ॥

अजादयोऽग्नेः प्रतिनिधीयन्ते मुख्यत्वादिसामान्यात् । यथोक्तं ब्राह्मणे–तमग्निर्देवता अन्वसृज्यत गायत्री छन्दो रथन्तरꣳ साम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्त, इत्यादि । तस्मादविकारोऽग्निलिङ्गानां मन्त्राणाम् । तत्रोद्धरणश्रपणप्रतितपनाद्यग्न्यभावान्निवर्तते । तथा श्रपणोद्धरणाभावादेवाजादीनां गार्हपत्ये स्थापनमपि निवृत्तम् ॥ ५२ ॥

अजस्येत्येकेषाम् ॥ ५३ ॥

पराग्निहोमपक्षे तु होमार्थमवस्थापयन्ति ॥ ५३ ॥

अजस्य तु ततो नाश्नीयात् ॥ ५४ ॥

अजजातिसंबन्धि मांसं क्षीरादि वा किंचिन्नाश्नीयात् । 'कर्णे चेन्मांसवर्जनम्' इत्याश्वलायनः ॥ ५४ ॥

अजामविन्दन्ब्राह्मणस्य दक्षिणे हस्ते जुहुयात् ॥ ५५ ॥

ब्राह्मणोऽप्यजया व्याख्यातः ॥ ५५ ॥

ब्राह्मणं तु वसत्यै नापरुन्ध्यात् ॥ ५६ ॥

असूयोदार्थं वचनम् ॥ ५६ ॥

ब्राह्मणं त्वविन्दन्दर्भस्तम्बे जुहुयात् ॥ ५७ ॥

भवत्यत्र ब्राह्मणम्–'अग्निवान्वै दर्भस्तम्बः' ( तै० ब्रा० ३-७-३) इति॥५७॥

दर्भाꣳस्तु नाध्यासीत ॥ ५८ ॥

अन्यत्र ब्रह्मयज्ञार्थत्वाद्द्वैवादासनादिति द्रष्टव्यमविरोधात् ॥ ५८ ॥

दर्भानविन्दन्नप्सु जुहुयात् ॥ ५९ ॥

कार्यकारणयोरभेदादिति भावः । भवति चात्र श्रुतिः—अग्निं या गर्भं दधिरे ( तै० सं० ५-६-१ ) इत्यादि ॥ ५९ ॥

आपस्तु न परिचक्षीतेमा भोजनीया इमा अभोजनीया इति ॥ ६० ॥

आपस्तु बीभत्सा अपि न वर्जयेदित्यर्थः ॥ ६० ॥

दातृदोषादपि न बीभत्सेतेत्याह—

अप्यभोजनीयस्यैतं संवत्सरं परिगृह्णीयादेवापः ॥ ६१ ॥

अभोजनीय अभोज्यान्नः ॥ ६१ ॥

अद्भिस्तु पादौ न प्रक्षालयीत ॥ ६२ ॥

सुखार्थस्य प्रक्षालनस्य निषेधो न शौचार्थस्यापि, प्रयतस्यैव कर्माधिकारात् ॥ ६२ ॥

सांवत्सरिकाण्येतानि व्रतानि भवन्ति ॥ ६३ ॥

'सांवत्सरिकाण्येतानि व्रतानि भवन्तीत्याश्मरथ्यः । यावज्जीवमित्यालेखनः' इति भरद्वाजः । सांवत्सरिकत्वविकल्पाभावः स्वमते । अप्यभोजनीयस्यैतं संवत्सरमिति लिङ्गात् । श्रुतिश्च भवति—संवत्सरꣳ हि व्रतं नाती(त्ये)ति ॥ ६३ ॥

संवत्सरेऽग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत् ॥ ६४ ॥

संवत्सरस्य परस्तादित्यापस्तम्बः । व्रातपत्येष्ट्या व्रतनिवृत्तिः ॥ ६४ ॥

अग्नये क्षामवतेऽष्टाकपालम् । यद्याहिताग्नेरग्नि-
र्गृहान्दहेत् ॥ ६५ ॥

येषां पूर्वापरा अन्वञ्चः प्रमीयेरन्गृहदाहे वेत्यापस्तम्बः । पूर्वे चापरे च वृद्धबाला वंश्या यदन्वञ्चः संतता म्रियेरन्दह्येरन्वा गृहास्तत्रेयमिष्टिर्नैमित्तिकी सिध्यति च तत्र कामो वाक्यशेषात् 'यथा नैषां पुरायुषोऽपरः प्रमीयते नास्यापरं गृहान्दहति' ( तै० सं० २–२–२ ) इति च ॥ ६५ ॥

अग्नये विविचयेऽष्टाकपालं यस्यान्यैरग्निभिरग्नयः
सꣳसृज्येरन्मिथो वा ॥ ६६ ॥

अन्यैर्लौकिकैर्वैदिकैर्वा संसर्गे पञ्चानां परस्परं संसर्गे चेयमेवेष्टिरुत्सर्गेण भवति । अपवादे त्वन्याः । ताश्च समारोपणेन विविक्तेष्वग्निषु भवन्ति । समारोपणमन्त्र एव तु तं तमग्निं हंसः क्षीरनीर इव विवेक्ष्यति । तथा संसर्गे प्रकृत्यारण्योरग्नीन्समारोप्येत्येव बौधायनः ॥ ६६ ॥

अग्नये वीतयेऽष्टाकपालं यदि गार्हपत्यदक्षिणाग्नी
सꣳसृज्येयाताम् ॥ ६७ ॥

गार्हपत्यदक्षिणाग्नी इति वचनात्तयोः पृथगेकदेशसंसर्गे न भवतीयमिष्टिः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ ६७ ॥

अग्नये विपृचयेऽष्टाकपालं यदि गार्हपत्याहवनीयौ ।
गार्हपत्यदक्षिणाग्नी इत्येकेषाम् ॥ ६८ ॥

दक्षिणाग्न्याहवनीयौ वेत्यापस्तम्बः । पूर्ववदन्वयः ॥ ६८ ॥

अग्नये व्रतभृतेऽष्टाकपालं यद्यभ्यादाह्येन ॥ ६९ ॥

संसृज्येरन्नग्नयः, इत्यन्वयः । अभ्यादाह्यो गृहदाही ॥ ६९ ॥

अग्नये शुचयेऽष्टाकपालं यदि शवाग्निना । अग्नये
संकुसुकायाष्टाकपालं यदि सूतकाग्निना ॥ ७० ॥

संसृज्येरन्नग्नय इत्यन्वयः सर्वत्र । शवाग्निश्चिताग्निः । सूतकाग्निर्जातकर्मार्थः ॥ ७० ॥

संकुसुको विकुसुको विकिरो यश्च विष्किरः ।
माषाज्येन नलेध्मेन क्रव्यादँ शमयामसि । अस्मि-
न्वयं संकुसुकेऽग्नौ रिप्राणि मृज्महे । अभूम य-
ज्ञियाः शुद्धाः प्र ण आयूꣳषि तारिषदिति या-
ज्यानुवाक्ये ॥ ७१ ॥

इदं याजुषं हौत्रम् ॥ ७१ ॥

अग्नयेऽप्सुमतेऽष्टाकपालं यदि वैद्युतेन ॥ ७२ ॥

वैद्युतोऽशनिप्रभवः । संकुसुकादन्यासामाम्नाय एव याज्यानुवाक्याः ॥ ७२ ॥

सर्वे संनिपतेरन्नग्नये विविचये निरुप्याग्नये शुचये
निर्वपति । व्रातभृतीं तृतीयामप्सुमतीं चतुर्थीं
क्षामवतीमन्ततः परिक्रमयेत् ॥ (ख० ३) ॥ ७३ ॥

यत्र तु गृहदाहादिनिमित्तसमुच्चयात्क्षामवत्यादयोऽप्सुमत्यन्ताः सर्वा इष्टयः संनिपतेयुस्तत्र निमित्तक्रमभेदे सत्यप्यनेनैव क्रमेणेष्टीर्निर्वपेत् । व्रातभृतीं चाधिकां तृतीयाम् । तत्राप्सुमतीं चतुर्थीं निरुप्य ततो विपृगादिभ्यः संकुसुकान्तेभ्यः शुचिवर्जं निर्वपेत् । ततः क्षामवतीमाद्यां सतीमन्तं गमयेत् ॥ ७३ ॥

व्रातभृतीं द्वितीयामेके समामनन्ति । व्रातपतीमुत्तमाम् ॥ ७४ ॥

अथवा विविचये निरुप्य व्रतभृते निर्वपेत् । ततोऽनन्तरोक्तेनैव क्रमेण शुच्यादिभ्यः क्षामवदन्तेभ्यः । ततोऽन्ते व्रातपतीमित्यर्थः । कतिपयनिमित्तसंनिपाते तु क्रमेणैवेष्टयो भवन्ति ॥ ७४ ॥

गर्भꣳ स्रवन्तमगदमकरग्निरिन्द्रस्त्वष्टा बृहस्पतिः ।
पृथिव्यामवचुश्चोतैतन्नाभिप्राप्नोति निर्ऋतिं परा-
चैरित्यग्निहोत्रस्थालीꣳ स्रवन्तीमभिमन्त्रयेत ॥ ७५ ॥

स्पष्टम् ॥ ७५ ॥

यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधश्चरुं येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमग्निरेवास्मै प्रजां प्रजनयतीति॥७६॥

यः पुरस्ताच्चन्द्रोदयवतीं तिथिं चतुर्दशीं तेन मिश्रां वा पञ्चदशीं यजनीयमहर्बुद्ध्वा तदनुगुणं प्रवृत्तदर्शतन्त्रो हविर्निर्वापोत्तरकालं तत्त्वं जानीयात्स निरुप्तस्य हविषस्तण्डुलान्स्थूलमध्यमाणुभेदेन त्रेधा विभज्य मध्यमानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् । अधिवपनादिष्वग्निं दातारमुपलक्षयेदित्यर्थः । स्थविष्ठानिन्द्राय प्रदात्रे सायंदोहे चरुं कुर्यात् । अणिष्ठान्विष्णवे शिपिविष्टाय प्रातर्दोहे । तत्र चरुधर्मा यवाग्वा व्याख्याताः । चरुसांनाय्ययोः श्रपणात्स्थानाच्च तयोरेव गुणविकारौ । पुरोडाशस्त्वाग्नेयविकार एव । पुनरिज्यायास्तु विकल्पः । तदुक्तम्—'एकामेव यजेत द्वे एव यजेत' इति । नायं विधिरसंनयतः, सांनाय्यसंयोगात् । आह चाऽऽश्वलायनः—सांनाय्ये पुरस्ताच्चन्द्रमसाऽभ्युदित इति । भारद्वाजस्त्वाह—'सोऽयं नासंनयतो विद्यत इत्येकम् । विद्यत इत्यपरम् इति । विद्यत इति पक्षेऽप्सु श्रपणम् । चर्वोरैन्द्राग्नवच्च धर्माः ॥ ७६ ॥

अनिरुप्तेऽभ्युदिते ॥ ७७ ॥

प्राकृतीभ्यो निर्वपेदित्यनुषङ्गः । यदा पुनरर्वाङ्निर्वापादकालप्रवृत्तिर्ज्ञाता तदा संशयः, किं प्राकृत्या एव देवतायै निर्वप्तव्यमुत वैकृतीभ्य इति । तत्र प्राकृतीभ्य इत्यापस्तम्बो मन्यते । प्राकृतीभ्य इत्यविवक्षिता संख्या ॥ ७७ ॥

व्यृद्धभाग्भ्यो निर्वपेत् ॥ ७८ ॥

'वि वा एतं प्रजया पशुभिरर्धयति' इत्यर्थवादेन व्यृद्धिहेतुत्वख्यापनादभ्युदितं हविर्व्यृद्धमित्युच्यते । तद्भजन्ते या वैकृत्यो देवतास्ता व्यृद्धभाजः । ताभ्यो निर्वपेदित्यर्थः ॥ ७८ ॥

तथैकदेशे निरुप्तेऽभ्युदिते व्यृद्धभाग्भ्यः शेषम् ॥ ७९ ॥

विनिरुप्तमर्धनिरुप्तम् । तत्राभ्युदिते प्राकृत्या एव देवतायै शेषं निर्वपेदित्यर्थः ॥७९॥

तामिष्टिꣳ संस्थाप्य वत्सानपाकृत्य श्वः सांनाय्येन यजेत ॥ ८० ॥

अथ निरुप्तानिरुप्तविशेषयोः शाखान्तरीया अपि कल्पा विकल्पार्थं प्रदर्श्यन्ते—'यस्यागृहीतं हविरभ्युदियाद्व्रतचर्यां वा नोदाशꣳसीत । स त्रेधा तण्डुलानिति पूर्ववत् ।

अथोत्तरस्मै हविषे वत्सानपाकृत्योपवसेत् ' इति भरद्वाजादयः । अगृहीतमनिरुप्तम् । अनिरुप्तविषये पूर्ववदभ्युदितेष्टिं कृत्वा पुनरिज्यां कुर्यात् । निरुप्तविषयेऽपि वक्ष्यमाणव्रतचर्याकल्पाशक्तावेव कुर्यादित्यर्थः । व्रतचर्यां वा नोदाशंसीत । व्रतचर्या उपवसथाभ्यासः । तां च नोदाशंसीत, न शक्ष्यामि कर्तुमित्युदीक्ष्य नाशंसीत नेच्छेदित्यर्थः । तथाच व्रताशक्तावेवेति कात्यायनः । पुनरिज्यानियममात्रमत्राधिकमिति वेदितव्यम् । ' अथ यस्य गृहीतं हविरभ्युदियात्सैव प्रायश्चित्तिः सा व्रतचर्या, इत्यापस्तम्बः । निरुप्तविषये सैवामावास्यैव पुनरभ्यस्ता प्रायश्चित्तिः, सा वा व्रतचर्या त्र्यमहरेव वाऽभ्यस्तमित्यर्थः । तदत्र निरुप्तविषयेऽनन्तरसूत्रोक्तेन कल्पेन सह त्रयोऽमी शाखान्तरकल्पा उक्ता भवन्ति, यथा प्रकृतिमेवाविकृतां कृत्वा तयैव पुनर्यजेत । अभ्युदितेष्टिं वा कृत्वा प्रकृत्या पुनर्यजेत । उपवसथमात्रं वा वर्धयित्वा पश्चाद्यजेतेति । तदेतदुक्तं बौधायनीये स ह स्माऽऽह बौधायनः सिद्धैरेवाऽऽमावास्यैर्हविर्भिरिष्ट्वा पुनरुपोष्य श्वोभूते काल्यामनभ्युदितामव्यापन्नां यजेत । अत्र ह स्माऽऽह शालीकिः—यैषा ब्राह्मणेऽष्टिस्तया व्यक्तयेष्ट्वा पुनरुपोष्य श्वोभूते काल्यामनभ्युदितामव्यापन्नां यजेतेत्यपि वोपावसथ एवातिप्रवर्धेत, इति । सा व्रतचर्येत्यत्र प्रयोगमाहाऽऽपस्तम्बः—' वत्सान्मातृभिः संसृज्य पुनरपाकृत्य पूर्वेद्युर्दुग्धं दधि हविरातञ्चनार्थं निदध्यात् ' ( आप० श्रौ०९–४–१४ ) इति । अग्न्यन्वाधानादि सर्वं कर्म यथानुष्ठितमेवावतिष्ठते । प्रातर्दोहार्थं त्वपाकृतान्वत्सान्मातृभिः संसृज्य सायंदोहार्थं पुनरु( र )पाकृत्य दध्युत्पादयेत् । यत्तु प्रागुत्पन्नं दधि हविस्तदातञ्चने निदध्यात्प्रतिपादयेत् । यदि प्रातर्दोहोऽप्युत्पन्नः स च तस्मिन्नेव दध्न्यभिदोहत्वेन योज्यो न त्याज्यः । तत एव न्यायात् । यस्तु निरुप्त एवाऽऽग्नेयो धार्यते, श्रपितश्चेत् त्याज्य एव, अशुक्तपर्युषितत्वादिदोषप्रसङ्गात् । ततः श्वोभूते कृतान्तात्प्रक्रम्य यजेत । यदा तु कृतायामिज्यायां चन्द्रज्ञानं तदा पुनरिज्यैव । अकाले कृतस्याकृतत्वात् ॥ ८० ॥

अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेदिति ॥ ८१ ॥

एतदुक्तं ब्राह्मणे कल्पान्तरेषु च तत्तथा कुर्यादित्यर्थः । इदं च तत्रोक्तम्—आरब्धदर्शपूर्णमासः संस्तयोरन्यतरं स्वकालादतिपाद्यादनडुद्दक्षिणां पाथिकृतीं निर्वपेदिति, तां च कृत्वा वैश्वानर्यपि कार्या, निमित्तैक्यात् । एकस्मिन्दोषे श्रूयमाणानीति वचनाच्च, ते च कृत्वाऽतिपन्नेष्टिरपि कार्या कालातिपत्त्यर्थत्वात्तयोः । उक्तं च बौधायनेन—पाथिकृतं निरुप्य वैश्वानरं द्वादशकपालं निर्वपेदथातिपन्नां प्रतियजे-

दिति । कल्पान्तरमप्याह । तत्राऽऽह स्म ह शालीकिः—पाथिकृतं निरुप्य वैश्वानरं द्वादशकपालं समानतन्त्रमनुनिर्वपेन्नचातिपन्नां प्रतियजेत, इति । तत्र च यावदुत्तरस्य कर्मणः कालस्तावदेवेष्टाऽतिपन्नेष्टिः । उत्तरेण त्ववरुद्धे काले प्रायश्चित्तमात्रं तदधिकाराय क्रियते नातिपन्नेष्टिः । अकाले कृतस्याकृतत्वात् । अथापद्यकृतप्रायश्चित्तस्यैव गौणमेनं कालमाहुः कल्पान्तरकाराः । भरद्वाजस्तावत्—' आ दर्शात्पौर्णमासस्य कालो नातीयादापौर्णमासाद्दर्शस्येति कालातिक्रमेऽप्यापदि यजेत, इति । निदानकारोऽप्याह—'सर्वत्राऽऽपूर्यमाणपक्षो दर्शस्य स्थानं कृष्णपक्षश्च पौर्णमासस्येति । तथा पौर्णमासेन हविषाऽपरपक्षमभि यजेताऽऽमावास्येन पूर्वपक्षमिति च वचनान्तराणि कल्पान्तरत्वान्न लिख्यन्ते । समानमेतद्द्विबहूनामतिपत्तावपीति द्रष्टव्यम् ।

योऽयं पाथिकृतः पुरोडाशः सोऽतिपन्नेष्ट्या सह । तथा चाऽऽह भगवानापस्तम्बः—'समानतन्त्रे वा मुख्यः कार्यः' (आप० श्रौ० ९–४–२) । तच्चातिपन्नेष्टेः सर्वथाऽतीतकालत्वे न संभवतीति गौणकाल एव व्यवतिष्ठते । न चास्मिन्कल्पे वैश्वानरी, शाखान्तरीयत्वात् पाथिकृतेन सहातिपन्नयागनिवृत्तेश्च । एवमुत्तरविकल्पयोर्द्रष्टव्यम् ॥ ८१॥

अथ प्रवृत्तस्यातिपत्तौ शाखान्तरीयं विधिमाह—

वि वा एतस्य यज्ञश्छिद्यते यस्य यज्ञे प्रततेऽन्तरेतामिष्टिं निर्वपन्ति । य एवासावाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां तमेवाग्नये पथिकृते कुर्यात्तेनैव पन्थां पुनरैवैति न यज्ञं विच्छिनत्तीति विज्ञायते ॥ ८२ ॥

यस्य प्रारब्धेष्टिर्मध्ये विहता स्यात्तस्य यदि मध्येयज्ञं पाथिकृती क्रियेत तदा स यज्ञः पूर्वप्रततो विच्छिद्येत, न चान्ते कर्तव्यतेष्यताम्, निर्हृत्य दोषमतिपन्नायाः कर्तव्यत्वात् । अतो य एव तत्राच्युत आग्नेयः स एव पथिकृद्गुणकः कार्यः, तेनैव पुनर्यज्ञस्य विहतस्य पन्थानं प्रतिपद्यते, न च यज्ञो विच्छेदितो भवतीति ।

स चायं कल्पः प्रवृत्तस्यातिपत्तौ पूर्वाभ्यां विकल्पाभ्यां विकल्प्यते, शाखान्तरीयत्वात् । अप्रवृत्तस्य तु पूर्वावेव भवतः प्रवृत्तैकविषयत्वादस्य ॥ ८२ ॥

प्रवृत्तस्य कालातिनयेऽप्रवृत्तस्य वैश्वानर्यग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत् ॥ ८३ ॥

आचार्यस्तु पाथिकृतीमपि प्रवृत्ताविषयां वष्टि यथा एनां प्रकृत्याऽऽहेति प्रवृत्तस्य कालापनयेऽप्रवृत्तस्य वैश्वानरीयेति । नायमभिप्राय आपस्तम्बस्य । तस्य सामान्यतो वचनादत्र विशेषवचनाच्च ॥ ८३ ॥

य आहिताग्निः सन्नव्रत्यमिव चरेत् । य आहि-
ताग्निः प्रवसेदित्येकेषाम् ॥ ८४ ॥

व्रतभ्रेषोऽव्रत्यचरणम् । 'व्रत्येऽहनि मांसं वाऽश्नाति स्त्रियं वोपैति' ( आप० श्रौ० ९--१--४) इति वचनान्न पूर्वाभ्यां संबध्यते । तेन सार्वकालिकयोरेव व्रतभ्रेषप्रवासयोर्भवति व्रातपती । व्रत्येऽहनीति सूत्रान्तरवचनं काकाक्षिवदुभयत्र संबध्यत इत्यपरम् । बौधायनश्चाऽऽह- 'य आहिताग्निः सन्नव्रत्यमिव चरेदित्याधानप्रभृत्येवेदमुक्तं भवतीति । अन्वाहितेष्वेवोपसमाहितेषु चेति शालीकिः' इति ॥ ८४ ॥

अग्नये व्रतभृतेऽष्टाकपालं य आहिताग्नि-
रार्तिजमश्रु कुर्यात् । व्रातभृतीं प्रवास
एके समामनन्ति । व्रातपतीमश्रुकर्मणि ॥ ८५ ॥

आर्तिजग्रहणं हर्षजाश्रुव्यावृत्त्यर्थम् । केचिद्व्रतभृद इति दकारश्छान्दसः प्रामादिको वा । व्रत्येऽहनीत्यनुषङ्गः । तथा च बह्वृचाः-'तदाहुर्य आहिताग्निरुपवसथेऽश्रु कुर्वीत' इति ॥ ८५ ॥

त्वमग्ने व्रतभृच्छुचिर्देवाꣳ आसादया इह । अग्ने
हव्याय वोढवे ॥ व्रता नु बिभ्रद्व्रतपा अदाभ्यो
यजा नो देवाꣳ अजरः सुवीरः । दधद्रत्नानि
सुविदानो अग्ने गोपाय नो जीवसे जातवेद इति
याज्यानुवाक्ये ॥ (ख० ४) ॥ ८६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चदशप्रश्ने प्रथमः पटलः ॥

इदं याजुषं हौत्रम् ॥ ८६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां पञ्चदशप्रश्ने प्रथमः पटलः ॥

---

अथ पञ्चदशप्रश्ने द्वितीयः पटलः ।

---

यस्माद्भीषा निषीदसि ततो नो अभयं कृधि ।
प्रजाभ्यः सर्वाभ्यो मृड नमो रुद्राय मीढुष इत्य-
भिमन्त्रयेत ॥ १ ॥

तामिति शेषः ॥ १ ॥

यद्यग्निहोत्र्युपसृष्टोपसन्ना वा निषीदेदुदस्थाद्देव्य-
दितिर्विश्वरूप्यायुर्यज्ञपतावधात् । इन्द्राय कृण्वती
भागं मित्राय वरुणाय चेति तामुत्थाप्य दुग्ध्वा
ब्राह्मणाय दद्यात् ॥ २ ॥

अग्निहोत्रद्रव्यधुग्धेनुरग्निहोत्री । सा यदि प्रस्रवणार्थमुपसृष्टा संयोजितवत्सा वा निषीदेदुत्थापयत्यध्वर्युः । तां दुग्ध्वा सह क्षीरेण तस्मै दद्याद्यजमानो यस्यान्नं न भुञ्जीत । अत्र शाखान्तरश्रुतिमुदाहरत्यापस्तम्बः— ' अवर्तिमेवास्मिन्पाप्मानं प्रतिमुञ्चतीति विज्ञायते ' ( आप० श्रौ० ९–२–५ ) इति । तथा च कृते तस्मिन्नेवावर्तिलक्षणं पाप्मानं प्रतिमुञ्चति आसजति । अवर्तिर्दारिद्र्यमशनाया वा ॥ २ ॥

यस्यान्नं नाद्यादपि वैनां दण्डेन विपिष्याविपिष्य
वोत्थाप्याऽऽत्मन्कुर्वीत सूयवसाद्भगवती हि भूया
अथो वयं भगवन्तः स्याम । अद्धि तृणमघ्न्ये
विश्वदानीं पिब शुद्धमुदकमाचरन्तीति दर्भस्तम्ब-
मालु(लो)प्य ग्रासयेत् ॥ ३ ॥

तामात्मनि कृतामेवं ग्रासयित्वा ततो होमाय दुह्यादिति भावः ॥ ३ ॥

यदि दुह्यमाना वाश्येत यदि वा लोहितं दुहीत
व्युत्क्रामतेत्युक्त्वा दक्षिणाग्निं परिश्रित्य तस्मिन्ने-
तं श्रपयित्वा तस्मिन्नेव जुहुयात् । तां ब्राह्म-
णाय दद्याद्यमनभ्यागमिष्यन्मन्येत ॥ ४ ॥

व्युत्क्रामतान्यत्र गच्छतेति यजमानादीनां प्रैषः । यमनभ्यागमिष्यन् यं प्रति कस्मैचिदपि कार्याय न गमिष्यति तस्मै दद्यात् ॥ ४ ॥

यदद्य दुग्धं पृथिवीमसक्त यदोषधीरप्यसरद्यदापः ।
पयो गृहेषु पयो अघ्नियासु पयो वत्सेषु पयो
अस्तु तन्मयीत्येनदभिमन्त्र्य यदि दुह्यमानं
स्कन्देत्समुद्रं वः प्रहिणोमीत्येतयाऽद्भिरुपनिनीय
तदेव याद्दकीद्दग्घुत्वाऽन्यां दुग्ध्वा पुनर्जुहुयात्
॥ ५ ॥

सामान्यतोऽग्निहोत्रस्कन्दने—अस्कान्द्यौरित्यभिमन्त्रणम्, उन्नं भयेत्याद्भिः संसर्गं च वक्ष्यति तस्यायं पुरस्तादपवादः ॥ ५ ॥

---

१ ख. °यी त्वग्निहोत्रमभिमन्त्रयेत ।

अपि वा तां चैव दुह्यादन्यां वा यदि भिन्द्यादन्यां स्थालीं निर्णिज्याथान्यां दुह्यादुदकं त्वनुपरासिच्यम् ॥ ६ ॥

स्थाली चेदेकदेशतो भिन्द्यात्तदा प्रक्षाल्य तां स्थालीं तस्यामेवान्यां गां दुह्यात् । तामेव वा गां सा चेत्पुनः प्रपीना स्यात् । सर्वभेदे तु स्थाल्यन्तरमागमयेत् ॥ ६ ॥

यदि दुग्धꣳ स्कन्देद्यदि ह्रियमाणं यद्यधिश्रीयमाणं यद्यधिश्रितं यद्युद्वास्यमानं यद्युद्वासितमन्यामभिदुह्यात् ॥ ७ ॥

दुह्यमानस्कन्दने प्रायश्चित्तमुक्तं पूर्वसूत्रे । तथा दुग्धादीनामपि पुरस्ताद्वक्ष्यते । तत्रोभयेषामपि द्रव्यमनेन नियम्यते । अतो दुह्यमानस्य पुनर्ग्रहणम् । ह्रियमाणं गार्हपत्येऽधिश्रयणार्थम् । तदेव यादृगित्यादि स्कन्नशिष्टमेव यावत्तावद्वाऽल्पं शिष्टमपि होतव्यमित्यर्थः । अथ यद्यल्पतरमवशिष्टमनाहुतिक्षमं स्यात्तदा तस्योपर्यन्यां दोहयित्वा वर्धितेन होतव्यमित्यर्थः ॥ ७ ॥

अथ यद्युन्नीतꣳ स्कन्देद्यदि द्विर्यदि त्रिर्न तदाद्रियेतेत्येकेषाम् । चतुर्थमुन्नीयमानꣳ स्कन्देत्स्थाल्यां शेषमानीय ततश्चतुर्गृहीतं गृहीत्वा वारुणीमृचमनूच्य वारुण्यर्चा जुहुयात् ॥ (ख० ५) ॥ ८ ॥

यदि सकृद्द्विस्त्रिर्वोन्नीतं क्रमशो युगपद्वा स्कन्देन्न तदाद्रियेत । शिष्टेनैव जुहुयात् । आद्रियेतैव तु स्कन्नप्रायश्चित्तम् । आहुतिमात्रस्कन्दने प्रायश्चित्तविधानात् । यदि पुनश्चतुर्थं स्कन्देत्तदा स्रुचि शिष्टं स्थाल्यामानीय पुनरुन्नयितव्यमभिदोह्यं वा स्रुचि । तत्र चतुरित्येतदनुवादत्वात्पञ्चमस्याप्युपलक्षणं पञ्चावत्तिनः । तेन चतुर्थमित्येतदपि चतुर्थप्रभृतीत्युक्तं भवति । तथाऽत्र प्राक्चतुर्थादनादरवचनात्पूर्वसूत्रेऽप्युन्नीयमानमुन्नीतं वा स्कन्देदित्येतच्चतुर्थप्रभृत्येव स्कन्दनेऽवतिष्ठते । तस्य चानेन समुच्चयासंभवाद्विकल्पः । केचित्तु विनिवेशनं कुर्वन्ति । यत्र तु सकृद्द्विस्त्रिर्वोन्नीतस्कन्दने सति चतुर्थप्रभृत्यप्युन्नीतं स्कन्दति तत्रायं विधिः । अन्यत्र पूर्व इति ॥ ८ ॥

यद्युन्नीतꣳ स्कन्देत्पुनरभ्युन्नीय होतव्यमथाऽऽज्येन वारुणीमृचमनूच्य वारुण्यर्चा जुहुयात् ॥ ९ ॥

यद्युद्द्रुतस्य स्कन्देद्यत्ततो हुत्वा पुनरेयाद्यद्वं विच्छिन्द्याद्यत्र स्कन्देत्तं निषद्य पुनर्गृह्णीयात्तदेव यादृक्कीदृग्घुत्वाऽन्यां दुग्ध्वा पुनर्जुहुयात् ॥ १० ॥

उद्द्रुतस्येति आदिकर्मणि क्तः । उदद्रुतमुत्थाय प्राङ्नेतुं प्रक्रान्तमित्यर्थः । प्राङ्नय-नप्रभृत्युत्तरत्रोपादानात् । उक्तं च ब्राह्मणे—'बृहस्पतेरुन्नीतं सवितुः प्रक्रान्तं द्यावा-पृथिव्यं ह्रियमाणम्' इति । तदुद्द्रुतं यत्र स्कन्देत्तन्निषद्य तत्राऽऽसित्वा स्कन्नस्योपरि स्थालीं निधाय तस्याः पुनः स्रुचि गृहीत्वा तदेवाभिवर्धितं होतव्यं न तु ततः पृथग्द्र-व्यान्तरमुत्पादयितव्यमित्यर्थः । यथा चायमर्थस्तथा यद्युद्द्रुतस्य स्कन्देदित्यादिश्रुतिरेव विभावितव्या । व्याचष्टे च तां बौधायनो यथा—यदुद्द्रुतस्य स्कन्देत्तन्निषद्य पुनर्गृह्णी-यादिति । यत्रैव स्कन्दति तत्रैव स्थालीं निधायातिशिष्टमानीय पुनरभ्युन्नीय तदेव यादृ-क्कीदृक् च होतव्यमिति । पुनर्होमः प्रागेव व्याख्यातः । तस्मिन्कृते—अव ते हेड इत्यनुद्रुत्योदुत्तममिति वारुण्यर्चाऽऽज्याहुतिं जुहुयात् ॥ ९ ॥ १० ॥

यदि प्राचीनꣳ ह्रियमाणꣳ स्कन्देत्प्रजापतेर्विश्व-
भृति तन्वा( न्वां )हुतमसीत्यभिमन्त्र्याथाऽऽज्येन
वारुणीमृचमनूच्य वारुण्यर्चा जुहुयात् ॥ ११ ॥

अत्र तु ह्रियमाणमिति विशेषणाद्यावन्नियच्छत्युद्गृह्णाति वा तदाऽपूर्व एव विधि-र्भवति । प्राचीनं प्राक्प्रवृत्तम् । यावत्पुरतः पराहृतं स्यादित्यर्थः । तत्र प्रजापतेरित्य-भिमन्त्रणमन्त्रोऽस्कानित्यस्यापवादः । उपसर्गस्तु यथोक्त एव भवति । तत एतदेव स्कन्नशिष्टमग्निहोत्रद्रव्यं स्यान्न त्वन्यां दुग्ध्वा पुनर्होतव्यमित्यापस्तम्बीये स्वोश्मर-थ्यमतम् । पुनः सिद्धान्तमतात्तु पुनर्होमोऽपि कार्यः । तत्राशेषस्कन्दने स्थाल्याः पुनरु-न्नयनम् । स्थाल्या अप्यभाव आज्यं च प्रतिनिधिमाहाऽऽश्वलायनः—'प्रजापतेर्विश्वभृति तन्वं हुतमसीति तत्र स्कन्नाभिमर्शनम् । शेषेण जुहुयात् । पुनरुन्नीयाशेषे । आज्यमशेष' इति ॥ ११ ॥

यदि पुरः पराहृतꣳ स्कन्देदनूद्धृत्य पुनरभ्युन्नीय
होतव्यमथाऽऽज्येन वारुणीमृचमनूच्य वारुण्यर्चा
जुहुयात् ॥ १२ ॥

पुरः पराहृतं पुरस्तादुपसादनशेषं प्रति नीतमित्यर्थः । तत्रोपसन्नस्य पुरस्तादुपसाद-नादुपसाद्यमानेऽप्ययमेव विधिः । अनुदाहृत्य स्रुचमनु स्थालीमानीय 'चतुरभ्युन्नीय होतव्यमन्यया वाऽभिदोह्यमित्यापस्तम्बः ॥ १२ ॥

यदि पुर उपसन्नमहुतꣳ स्कन्देत्तदेव यादृक्कीदृ-
क्च हुत्वाऽन्यां दुग्ध्वा पुनर्जुहुयात् ॥ १३ ॥

दर्भेषूपसादनप्रभृत्या पूर्वाहुतेरयं विधिः । यदि पूर्वस्यामाहुत्यामिति पुरस्ता-दुपादानात्ततोऽर्वागवध्यन्तरानुपादानाच्च । तथा च ब्राह्मणम्—'ऐन्द्राग्नमुपसन्नम् ।

अग्नेः पूर्वाहुतिः ' इति । उपसन्नमहुतमुपसादनप्रभृति यावन्न हुतं तावदित्यर्थः ॥१३॥

नन्वेवं पूर्ववदनुक्तसिद्धे परावधावहुतमिति कस्मादुक्तम् । को दोषः । पूर्वं हि कथंचिद्गम्यमानत्वात्परावधिर्नोपात्तः । इदानीमापस्तम्बसूत्रे सोऽपि पठित इति तथैव दर्शितः । तेनाचोद्यमेतत् । पुनर्होमादि समानमुद्द्रुतस्कन्दनेन । एवमग्निहोत्रस्कन्दने द्रव्योत्पत्तिरुक्ता । इदानीं प्रायश्चित्तमाह—

**अस्कान्द्यौः पृथिवीमस्कानृषभो युवा गाः । स्कन्नेमा विश्वा भुवना स्कन्नो यज्ञः प्रजनयतु । अस्कानजनि प्राजन्या स्कन्नाज्जायते वृषा । स्कन्नात्प्रजनिषीमहीत्यग्निहोत्रꣳ स्कन्नमभिमन्त्र्याद्भिरुपनिनयेत् ॥ १४ ॥**

उपनिनयेत् संसृजेत् ॥ १४ ॥

**यदि सायꣳ स्कन्देदा होतोः प्रातर्नाश्नीयात् । यदि प्रातः स्कन्देदा होतोः सायं नाश्नीयात् ॥ १५ ॥**

सायंस्कन्दने प्रातरा होतोः, आप्रातर्होमं नाश्नीयात् । एवमा सायंहोतोः प्रातः । सर्वाग्निहोत्रद्रव्याणामयमेव विधिः स्कन्दने । द्रव्योत्पत्तौ त्वभिदोहनादिस्थाने तज्जातीयस्य द्रव्यस्य पुनराहरणमिति विशेषः ॥ १९ ॥

**दिव्या वा एतमशनिरभ्यवैति यस्याग्निहोत्रꣳ शिरिशि(शरश)रा भवति । समोषामुमिति ब्रूयाद्यं द्विष्यात् ॥ १६ ॥**

शिरिशिरेति शब्दानुकारः । यस्याग्निहोत्रं शिरिशिरायते तस्यायमशनिपातो दुर्निमित्तमिति यावत् । तत्र यजमानद्वेष्यस्य नाम गृहीत्वाऽध्वर्युर्ब्रूयात्—तत्र समोष देवदत्तमिति । ओषतिर्दाहकर्मा । तस्य संपूर्वस्य रूपं समोषेति ॥ १६ ॥

**यस्याग्निहोत्रेऽधिश्रिते श्वाऽन्तरा धावेद्गार्हपत्याद्भस्माऽऽदायेदं विष्णुर्विचक्रम इति वैष्णव्यर्चाऽऽहवनीयादुध्वꣳसंयन्नुद्द्रवेदेतयैव भस्मना शुनः पदमुपवपति ॥ १७ ॥**

ध्वंसयन्नितस्ततो भस्म विकिरन्गत्वा शुनः पदानि भस्मनाऽभिपूरयेत् । अधिश्रयणप्रभृति ओद्वासनादिदं प्रायश्चित्तम् । आप्रदानमित्यपरे । अन्यदा(था) सर्वप्रायश्चित्तमेव ॥ १७ ॥

यस्यानाहृतमग्निꣳ सूर्योऽभिनिम्रोचेद्यत्र दीप्यमानं परापश्येत्तत आहृत्यैनं प्रविशानीति वैष आधीयते ॥ १८ ॥

अहरहरेनमाहरेयुरिति दक्षिणाग्नावुक्तम् । तत्र यद्यनाहृतेऽग्नौ सूर्योऽस्तमियात्तदा पुष्टगृहादियोनिविशेषमनवेक्ष्य यत्र दृष्टोऽग्निस्तत आहृत्यैतं प्रविशानीत्येष विधीयते । वाकारः प्रसिद्धौ । अथवा एतं प्रविशानीति वा तूष्णीं वा विधीयत इत्यर्थः । अभिनिम्रोचेदिति वचनादभ्युदये तूष्णीमाधेयः ॥ १८ ॥

इति दक्षिणाग्नेरनुगतस्याऽऽधानकल्पः ॥ १९ ॥

सर्वत्रानुगतस्यापि दक्षिणाग्नेर्यथायोन्युत्पाद्या( दनम )यमेवाऽऽधानप्रकार इत्यर्थः । दक्षिणाग्नेरिति वचनात् । सभ्यावसथ्ययोस्तूष्णीमेवाऽऽधानम् । प्रायश्चित्तं तु सर्वेषु सर्वप्रायश्चित्तमेव, विशेषस्यानुक्तत्वात् ॥ १९ ॥

यस्यानुद्धृतमग्निꣳ सूर्योऽभिनिम्रोचेत् ॥(ख०६)॥ अग्निहोत्रं पूर्वꣳ हरेयुः । अथाग्निमुद्धरेयुः । अपि वा दर्भेण हिरण्यं प्रबध्य पूर्वः प्रतिपद्येतान्वङ्ब्राह्मण आर्षेयो बहुविदग्निमुद्धरेत् । अन्वङ्ङग्निहोत्रेणानुद्रवेदग्निं प्रतिष्ठाप्याग्निहोत्रमुपसाद्याऽऽतमितोरप्राणन्नासित्वा वरं दत्त्वा हुत्वा भूर्भुवः सुवरित्युपतिष्ठेत वारुणं चरुं निर्वपेत् ॥ दोषावस्तर्नमः स्वाहेति जुहुयात् ॥ २० ॥

अधिवृक्षसूर्ये प्रणयनस्योक्तत्वात् । तदतिक्रमे प्रायश्चित्तमिदम् । अत उद्धरणशब्देन प्रणयनं लक्ष्यते । यथा यस्याग्नावग्निमुद्धरेयुरित्यादौ । तथा यस्याऽऽहवनीयमप्रणीतमभ्यस्तमियादित्याश्वलायनः । तेनोद्धतेऽप्यप्रणीते भवत्येव प्रायश्चित्तम् । वेदार्थविदार्षेय इति व्याख्यातं ब्रह्मौदने । तत्रैव बहुविषयं वेदनं यस्य स बहुवित् । अथवा ब्राह्मण आर्षेय उद्धरेदिति ब्राह्मणस्य व्याख्या बहुविदिति । तत्र च वेदनबहुत्वस्यापेक्षितत्वात् । यस्य यस्य यतो यतो वेदनप्रकर्षस्तस्य तस्य परिग्रहे गुणातिशय इति द्रष्टव्यम् ।

तत्रेध्माहरणादारभ्य प्रागुद्द्रवणादाहवनीयकर्मवर्जमध्वर्युणा कृते यजमानस्य परिकर्मी कश्चिद्दर्भेण बद्धं हिरण्यं पुरस्ताद्धरेत् । तमन्वङ् अनुगतो बहुविदग्निमुद्धरेद्विधिवत्प्रणयेत् । तमन्वङ्ङग्निहोत्रेणाध्वर्युरनुद्द्रवेत् । ततः परिकर्मिणा स्थापिते हिरण्ये बहुविदग्निं प्रतिष्ठाप्य मुञ्चति । ततोऽग्निहोत्रमुपसादयत्यध्वर्युः । नित्यामिति सूत्रान्तरे

नित्याग्निहोत्रमेवेदं न तु वैकृतं सत्पुनर्होमापेक्षमित्यर्थः । नित्यः पर्यस्तो नियत इत्यन्ये । तत आहवनीयस्येध्माधानादिप्रतिपद्याः पूर्वाहुतेः कृत्वा ततो यावत्तास्य( म्य )ति तावदनुच्छ्वसन्नासीत । उच्छ्वस्य हुत्वाऽग्निहोत्रं वृष्टिरसीत्यपामुपस्पर्शनान्ते कृते भूर्भुवः सुवरित्याहवनीयमुपस्थाय तदानीमेव वारुणं चरुं निर्वपेत् । श्वोभूत इति भरद्वाजः । दोषावस्तर्नमः स्वाहेति जुहुयात् । एतदेव नित्यमग्निहोत्रमित्याश्मरथ्यः । अथाऽऽलेखनः कालसमापादनीयमेवानेन मन्त्रेण होमं हुत्वा नित्यमग्निहोत्रं जुहुयादिति पूर्ववत् ॥ २० ॥

**यदि सायमग्निहोत्रस्यर्तुमति नयेत्प्रातर्वस्तर्नमः स्वाहेति जुहुयात् ॥ २१ ॥ यदि प्रातरग्निहोत्रस्यर्तुमति नयेत्कालसमाप(पाद)नीयमेताभ्यां मन्त्राभ्याᳪं हुत्वा नित्यमग्निहोत्रं जुहोति ॥ २२ ॥**

अग्निहोत्रे संध्यादयः सायंप्रातर्होमकाला उक्ताः । तेषां सर्वेषामतिपत्तौ प्रायश्चित्तमुपदिश्यते । तथा प्रदोषान्तो होमकालः, संगवान्तः प्रातस्तमतिनीयेत्याश्वलायनः । तत्र त्वापदि काला उक्ताः सूत्रकृता— 'यन्मध्यंदिने जुहोति ' इत्यादिना । तथोपग्रन्थकारेणाप्युक्तम्—' सर्वमहः प्रातराहुतेः स्थानं सर्वा रात्रिः सायमाहुतेः' इति । भरद्वाजोऽप्याह—' सायं होमं चोपोदयं जुहुयात् । प्रातर्होमं चोपास्तमयम् । कालेन कालमनतिक्रम्य न स्कन्दने न व्यथन्ते, इति विज्ञायते ' इति । तस्मादनापद्येतत्प्रायश्चित्तम् । आपदि तु होम एव क्रियेत । यावदुत्तरस्य कालः प्राप्स्यति । प्राप्ते तूत्तरस्मिन्न पूर्वः क्रियेत, भ्रष्टकालत्वात् । प्रायश्चित्तं तु तत्र परस्ताद्दर्शयिष्यते । कालः समापद्यते येन स कालसमापादनीयः । तं हुत्वेध्माहरणादि । स एवाग्निहोत्रार्थे कौश्चिदिष्टस्तन्निरासार्थमुक्तं नित्यमग्निहोत्रमिति ॥ २१ ॥ २२ ॥

**सायमग्निहोत्रमुपसाद्य भूर्भुवः सुवरिति पुरस्ताद्धोतोर्वदति हुत्वा च प्रातरग्निहोत्रमुपसाद्याऽऽतमितोरप्राणन्नासित्वा वरं दत्त्वा हुत्वा भूर्भुवः सुवरित्युपतिष्ठेतानुगमयत्याहवनीयमन्वग्निरुषसामग्रमख्यदित्यन्यं प्रणीयेहैव क्षेम्या एधि मा प्रहासीन्माऽमुमामुष्यायणमित्युपतिष्ठेत । मैत्रं चरुं निर्वपेत् ॥ २३ ॥**

व्याख्यातः पूर्वेण । अमुमामुष्यायणमिति यजमानस्य नामगोत्रयोर्निर्देशः । यथा देवदत्तं भार्गवमिति ॥ २३ ॥

**सौर्यमेककपालमेके समामनन्ति ॥ २४ ॥**

सौर्यस्याऽऽग्रयणोक्ता एककपालधर्माः कार्याः । स चाऽऽग्नेयविकारः ॥ २४ ॥

**तस्या॰ सꣳस्थितायामनश्नन्तौ वाग्यतावेतद्-
हर्जायापती अग्निमिन्धानावासाते ॥ २५ ॥**

'सꣳस्थितायामिष्ट्यामाहवनीयमेवैतदहरिन्धानावनश्नन्तौ वाग्यतावासाते यजमानः पत्नी च' (आप० श्रौ० ९–२–७) इत्यापस्तम्बः । आहवनीयमेवेति तमेवाऽऽहवनीयं सायंहोमार्थमिन्धानावित्यर्थः । अथ वा सर्वाग्नीन्धनस्याऽऽश्वलायनादिभिरिष्टत्वात्तन्निवृत्त्यर्थ एवकारः ॥ २५ ॥

**द्वयोः पयसा सायमग्निहोत्रं जुहुयात् ।
पूर्वमाधिश्रित्योत्तरमानयेत् ॥ २६ ॥**

द्वयोर्गवोरिति शेषः पूर्ववत् । यथा द्वयोः पयसा पशुकामस्य जुहुयादित्यत्रोक्तरीत्येत्यर्थः । तत्र पूर्वमधिश्रयणमुपकारार्थमिति गम्यते ॥ २६ ॥

**यस्यानुद्धृतमग्नि॰ सूर्योऽभ्युदियाच्चतुर्गृहीतमाज्यं गृहीत्वा पूर्वः प्रतिपद्येतान्वङ्ब्राह्मण आर्षेयो बहुविदग्निमुद्धरेत् । अन्वङ्ङग्निहोत्रेणानुद्रवेदग्निं प्रतिष्ठाप्याग्निहोत्रमुपसाद्य ॥ (ख० ७) ॥ पुरस्तात्प्रत्यङ्ङासीन उषाः केतुना जुषतां यज्ञं देवेभिरिन्वितं देवेभ्यो मधुमत्तम॰ स्वाहेत्येतच्चतुर्गृहीत॰ हुत्वा नित्यमग्निहोत्रं जुहुयात् ॥ २७ ॥**

व्याख्यातोऽभिनिम्रोचनविधिना । इयांस्तु विशेषः–हिरण्यस्थाने जुह्वां चतुर्गृहीतं हरेत् । तच्च प्रतिष्ठापितेऽग्नावध्वर्युरग्निहोत्रमुपसाद्य पुरस्तादाहवनीयस्य प्रत्यङ्मुख उपविश्य–उषाः केतुनेति जुहुयादिति ॥ २७ ॥

**तस्य स एव होमकल्पः । सा प्रायश्चित्तिः ।
यत्प्रातर्ऋतावतीते ॥ २८ ॥**

आतमितोरप्राणन्नित्यादिर्वरदानान्तो होमकल्पोऽनन्तरविधिना समानः । तथाऽऽदित्योपस्थानादि द्वयोः पयसा होमान्तं प्रायश्चित्तम् । यत्प्रातर्ऋतावतीते यत्प्रातःकालातिपन्ने सतीत्यर्थः ॥ २८ ॥

**एतावन्नाना । नात्रानुगमयत्याहवनीयम् ॥ २९ ॥**

तस्मिन्नेवाग्नौ मैत्रेष्टिः सायंहोमश्चेति भावः ॥ २९ ॥

यस्याहुतमग्निहोत्रꣳ सूर्योऽभ्युदियादुन्नीयाऽऽतमितोरमाणन्नासित्वा हुत्वा भूरित्युपतिष्ठेत । वरो दक्षिणा ॥ ३० ॥

यस्यानुदिते होष्यामीत्यभिसंधाय प्रक्रान्तमग्निहोत्रमनुदित एवाहुतं स्यात्तद्यथा प्रक्रान्तप्रसवा स्त्री सद्योऽप्रसूताऽऽर्तिमियात् तादृगार्तं भवति । तेन च यजमानोऽप्यात्मानं रुणद्धि दुःखायाऽऽत्मानं नयतीत्यर्थः । ततो दुःखाय रुद्धः सर्वज्यानिं जीयते सर्वा बाधाः प्राप्नोति । तस्मादादर्तव्यमेतत् प्रायश्चित्तमिति भावः । आतमितोरप्राणन्नित्यादि व्याख्यातम् ॥ ३० ॥

यद्यन्ते स्यादुन्नीय प्राङुदाद्रवेत्स उपसाद्याऽऽतमितोरासीत यदा ताम्येदथ भूः स्वाहेति जुहुयात् ॥ ३१ ॥

यद्यन्ते स्याद्यद्येतान्निमित्तं होमसमीपे स्यात् । किमुक्तं भवति । यदि निष्पन्नेऽग्निहोत्रद्रव्येऽर्वाग्घोमादुदयः स्यादित्यर्थः । तथा च भरद्वाजः—'यद्यन्ते स्यादित्यग्निहोत्रादनन्तरवादोऽभिप्रेतः' इति । तत्रोन्नयनाद्योपसादनात्कृत्वा प्राणायामेन तान्तो भूः स्वाहेति पूर्वाहुतिं जुहुयात् ॥ ३१ ॥

यस्य होष्यामीति प्रवृत्ते हुतमग्निहोत्रꣳ सूर्योऽभ्युदियाद्धुत्वा तदथोत्साद्य पुनराधेय इत्येकेषाम् ॥ ३२ ॥

होष्यामीति प्रवृत्ते, इति हुत्वा तदग्निहोत्रं विधिवदुद्वास्य पुनराधेयमप्यस्य प्रायश्चित्तत्वेन कार्यमित्याश्मरथ्यो मन्यते । नत्वन्येषामेतन्मतमित्यर्थः ॥ ३२ ॥

यस्योभावनुगतौ सूर्योऽभ्युदियात् । अपिवाऽस्तमियात् । यदिवाऽरण्योः समारूढो नश्येत्पुनराधेयमेव । तत्र प्रायश्चित्तम् ॥ ३३ ॥

सूर्योऽभिनिम्रोचेदभ्युदियाद्वा (आप० श्रौ० ९–२–७) इत्यापस्तम्बोक्तेश्च ॥३३॥

अग्नये तन्तुमतेऽष्टाकपालं निर्वपेद्यस्याग्निहोत्रं विच्छिद्येत द्व्यहे त्र्यहे वा ॥ ३४ ॥

चतुर्षु होमेष्वतिपन्नेषु तन्तुमती कार्या, षट्सु वाऽष्टासु वा । प्राक्तेभ्योऽवधिभ्यो विच्छेदे वैशेषिकप्रायश्चित्तावचनात्सामान्योक्तः सप्तहोता भवति, सप्तहोत्रा यज्ञविभ्रष्टं याजयेदिति । न चाग्निहोत्रस्यायज्ञत्वादयज्ञविभ्रेषत्वमस्य शङ्कनीयम् । तस्मादग्निहोत्रस्य यज्ञक्रतोः, इति तस्यापि यज्ञसंस्तवाद्बौधायनेनास्यैवाऽऽहृत्य यज्ञविभ्रेषत्ववचनाच्च । यथा प्रोषितमधिकृत्योक्तम्—अथ यद्यस्मै यज्ञविभ्रेषमाचक्षते, न तेऽहोषु-

रितीति । तथोपग्रन्थकारेणापि को नु खलु विश्रेष इति प्रकृत्योक्तम्—'यस्याग्निहोत्रस्याऽऽहुती अन्योन्यस्य स्थानमापद्येते' इति । तस्माद्युक्तमेव सप्तहोता भवतीति । यज्ञविभ्रेषेष्टेस्तु विषयव्यवस्था प्रागेव दर्शिता । कात्यायनस्तत्राऽऽह—'अग्निहोत्रातिपत्तावाहुतिं जुहुयान्मनो ज्योतिर्जुषतामिति । आश्वलायनश्च मनस्वत्या चतुर्गृहीतं प्रकृत्याऽऽह—अग्निहोत्राहोमे च प्रतिहोममेकः, इति । बौधायनेनासमारूढविषये प्रतिहोम एवोक्तः । 'यथा दीप्यमानेष्वेवाहूयमानेषु यावन्त्यतिक्रान्तान्यग्निहोत्राणि स्युस्तानि प्रतिसंख्याय जुहुयात्' इति । विदुषस्तु ब्राह्मणोक्तमप्यनुसंधेयम्—'तस्माद्यस्यैवं विदुषः उतैकाहमुत द्व्यहं न जुह्वति हुतमेवास्य भवतीति । अत्र चतुरहादूर्ध्वमनेकविच्छेदेऽप्ययमेव विधिः । अतोऽन्यस्यावचनात् । अर्वाक्चतुरहादिष्टिनिवृत्त्यर्थत्वाच्चाधिकवचनस्य । भरद्वाजस्त्वत्र समारूढाग्नेश्चिरकालं होमादिविच्छेदे विशेषमाह—होमेष्वहूयमानेषु चाऽऽत्मन्यरण्योर्वा श्रियमाणानां कथं तत्र न लुप्यते द्वौ मासावहुतेऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ट्वाऽग्नये पथिकृतेऽग्नये वैश्वानरायाग्नये व्रतपतयेऽग्नये व्रतभृत इत्येषा महापथिकृदिष्टिः । 'पवित्रेष्ट्या यजेताग्निहोत्रदर्शपूर्णमासावितिं सर्वमाप्नोति' इति । तथा षण्मासानहुतेऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ट्वा वेति प्रकृत्य पूर्ववदेव पवित्रेष्ट्यन्तमुक्त्वाऽतिपवित्रेष्ट्या यजेतेत्युक्तवान् । अतो यदत्र कैश्चिच्चतुरहादूर्ध्वं होमविच्छेदेऽग्निर्नश्यतीत्युक्तं तदतिसाहसं पश्यामः ॥ ३४ ॥

**स्वयं कृण्वानः सुगमप्रयावं तिग्मशृङ्गो वृषभः शोशुचानः । प्रत्न९ सधस्थमनुपश्यमान आतन्तुमग्निर्दिव्यं ततान ॥ त्वं नस्तन्तुरुत सेतुरग्ने त्वं पन्था भवसि देवयानः । त्वयाऽग्ने पृष्ठं वयमारुहेमाथा देवैः सधमादं मदेमेति याज्यानुवाक्ये ॥ ३५ ॥ (ख०८) ॥**

**इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चदशप्रश्ने द्वितीयः पटलः ।**

इदं याजुषं हौत्रम् ॥ ३६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां पञ्चदशप्रश्ने द्वितीयः पटलः ।

अथ पञ्चदशप्रश्ने तृतीयः पटलः ।

यस्याऽऽहवनीयेऽनुद्वाते गार्हपत्य उद्वायेदाहवनीयमुद्वाप्य गार्हपत्यस्यावक्षाणानि संनिधायेतः प्रथमं जज्ञे अग्निरिति मन्थेदाहवनीयं प्रणीयाग्ने सम्राडिषे रय्यै रमस्व सहसे द्युम्नायोर्जेऽपत्याय सम्राडसि स्वराडसि सुषदा सीद सारस्वतौ त्वोत्सौ समिन्धातामित्युपसमिन्धेऽग्नये तपस्वते जनद्वते पावकवतेऽष्टाकपालं निर्वपेत् ॥ १ ॥

यत्राजस्रे कर्मार्थे प्रणीते वाऽग्नौ ध्रियमाणे गार्हपत्य उद्वायेत्तत्राऽऽहवनीयं दक्षिणाग्निं च गार्हपत्ययोनिमुद्वाप्य यथोक्तेन प्रकारेणाग्नीनुत्पाद्य तपस्वतीष्टिर्वक्ष्यमाणा, आहुतयो वा । ततः कर्मसमाप्तिः । सावित्रसारस्वतचतुर्होत्रादयो दर्विहोमा उदाहरणम् । अग्निहोत्रं च प्राग्घोमकालादिष्टिपशवोऽपि प्रागन्वाधानात् । परतस्त्वन्वाधानाद्धोमकाले च तत्तत्प्रायश्चित्ताभ्यां वैशेषिकाभ्यामपोद्यत एवायं विधिः । अपवदति च स्वविषये यदि गार्हपत्य इत्यादिविधिम् । तं प्रति विशेषविषयत्वात् । तेनाकर्मकालेऽप्ययमेव विधिरजस्राग्नेः ।

अथवा विकल्प एव तयोर्विध्योर्न सामान्यविशेषभावः शाखाभेदात् । वक्ष्यत्याचार्यः— ‘ यस्याग्निरनुगच्छेदित्येकेषाम् । न कालमवधारयेदिति । तेभ्य एवावक्षाणेभ्योऽधिमन्थितव्यः’ ( स० श्रौ० १९–३) इति । भरद्वाजश्चाऽऽह—अथैकेषाम् । यतरोऽग्निरनुगच्छेत्तेभ्य एव दारुभ्योऽधिमन्थितव्य इत्यादि । अत्र बह्वृचवाजसनेयकयोराश्वलायनकात्यायनबौधायनैश्चाऽऽहवनीयं ध्रियमाणमाहृत्य गार्हपत्यायतने निधाय ततः पुनः प्रणयनमुक्तम् । तत्र बह्वृचे तावदाहवनीयमधिकृत्याऽऽम्नायते—‘सर्वमेवैनं सहभस्मानं समोप्य गार्हपत्यायतने निधायाथ प्राञ्चमाहवनीयमुद्धरेत् ’ इति । वाजसनेयकेऽप्ययमेवान्तरः पाठः । तथाऽऽश्वलायनकादावपि । बौधायनीये तु ‘ सर्वमाहवनीयं भाण्डे समोप्य दक्षिणेन विहारं हृत्वाऽऽयतनद्वयादपि भस्मोद्वास्य शकृत्पिण्डेनोपालिप्य न्युप्योपसमाधाय प्रणयनमिति विशेषः । तथा प्रायश्चित्तेऽपि विशेष उक्तः षट्स्रुवाहुतीर्जुहुयात्—‘उद्बुध्यस्वाग्ने त्वमग्ने सप्रथा असि मनो ज्योतिर्जुषतां तन्तुं तन्वन्नुद्वत्यं चित्रम्’ इति ॥ १ ॥

आयाहि तपसा जनेष्वग्ने पावको अर्चिषा । उपेमां सुष्टुतिं मम ॥ आ नो याहि तपसा जनेष्वग्ने पावक दीयत् । हव्या देवेषु नो दधादिति याज्यानुवाक्ये ॥ २ ॥

गतः । इदं याजुषं हौत्रम् ॥ २ ॥

एतदेवाऽऽहवनीयेऽनुगते प्रायश्चित्तम् । नात्र गार्हपत्यमनुगमयत्यग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपति ॥ ३ ॥

तत्र तत्राऽऽहवनीयानुगतौ यथाविहितमग्निमुत्पाद्य ज्योतिष्मतीं निर्वपति । यथा यदि सायमहुतेऽग्निहोत्रे यदि प्राग्घोमकालादित्यादौ । यत्र तु प्रायश्चित्तविशेषश्चोदितस्तत्र स एवेष्यते यथाऽन्वाहितादौ । तेनाप्येषा विकल्पित (ल्प्यत) इत्यन्ये ॥३॥

ननु पूर्वसूत्रेण तपस्वत्यपि तत्र तत्र प्राप्ता । तत्किमनयोरेकस्मिन्दोषे श्रूयमाणत्वात्समुच्चयः । नेत्याह—

न तपस्वते ॥ ४ ॥

यदा ज्योतिष्मते निर्वपति तदा न तपस्वते । विकल्प एव त्वनयोः शाखाभेदादिति भावः । अथवा सर्वत्रानुगतेष्टिमित्यनेन सहैतत्सामान्यविशेषभावेन योजनीयम् । सर्वाग्निषु तपस्वती । ज्योतिष्मती त्वाहवनीये न तपस्वत इति बाध एव तत्र तपस्वत्या इत्यर्थः । मन्थनविषये तु यदि गार्हपत्य आहवनीयो वेति विधिना तपस्वत्येव सर्वत्र न ज्योतिष्मती विशेषविहितत्वात् । अन्यथाऽऽहवनीये तस्यानवकाशत्वप्रसङ्गाच्च । तत्रापि तु द्वयोर्विकल्पः, इत्यपरम् ॥ ४ ॥

यदि सायमहुतेऽग्निहोत्रे पूर्वोऽग्निरनुगच्छेदग्निहोत्रमधिश्रित्योन्नीयेत्येकेषाम् । अग्निना पूर्वेणोद्धृत्याग्निहोत्रेणानुद्र(नूद्द्र)वेद्यो ब्राह्मणो बहुविद्स्सोऽग्निमुद्धरेत् । यत्पुनराधानमादायी स्यात्तद्द्यात् ॥ ५ ॥

यद्यप्यत्राहुतेऽग्निहोत्र इतिवचनादा पूर्वाहुतेरयं विधिरास्थेयः । तथाऽप्यधिश्रित्याग्निहोत्रमुन्नीय वेत्युद्धरणकालनियमात्सहाग्निहोत्रेणोद्द्रवणवचनाच्च ततः पूर्वकाल एवास्य संकोचः सामर्थ्यात् । बहुविद्व्याख्यातः । तदयमर्थः—विहरणकालप्रभृत्याऽधिश्रयणादोन्नयनाद्वाऽऽहवनीयानुगतौ पूर्ववदाऽऽहवनीयकर्मवर्जमाधिश्रयणान्त उन्नयनान्ते वा कर्मणि कृते बहुविद्ब्राह्मणस्तूष्णीमग्निमुद्धरेत् । ततोऽध्वर्युः कृतान्तादारभ्योद्द्रवणात्कृत्वा

सहाग्निहोत्रेण बहुविदमग्निं नयन्तमनु( नू )द्द्रवेत् । ततो बहुविदा प्रतिष्ठापितेऽग्नौ तस्मै यजमानस्तद्धनं दद्याद्यस्मै स्पृहयालुरात्मार्थं निहितवान् नेदमन्यस्मै दास्यामीति । तेनैवाच्युतेन धनेनैनमाहवनीयं गार्हपत्याच्च्यावितवि ( वा ) न् भवति, एनं बहुविदं वा ततोऽग्निहोत्रमन्यस्मै दत्त्वाऽन्यत्र वा निधायानुगतेष्टिर्मित्राद्याहुतयो वा । तत आहवनीयकर्माण्यकृतानि कृत्वा कृतान्तादारभ्याग्निहोत्रसमाप्तिः । समानोऽयं विधिरजस्रे विशेषावचनात् । न चाहुतेऽग्निहोत्र इति वचनादाग्निहोत्रमात्रार्थाग्निविषयो युक्त इति वाच्यम् । यदि प्रातरहुतेऽग्निहोत्रे परोऽग्निरनुगच्छेदित्यत्र व्यभिचारात् । यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेदित्यन्यत्र विशेषवचनाच्च ॥ ५ ॥

**यदि प्रातरहुतेऽग्निहोत्रेऽपरोऽग्निरनुगच्छेदनुगमयित्वा पूर्वं मथित्वाऽपरमुद्धृत्य जुहुयात् ॥ ६ ॥**

प्रातर्विहरणकालप्रभृत्या पूर्वाहुतेर्गार्हपत्यानुगतावाहवनीयोद्वापनादि तपस्वत्यन्तं कर्म यस्याऽऽहवनीयेऽनुद्वात इत्यादिविधिना समानम् । तत्कृत्वा ततोऽग्निहोत्रं जुहुयादित्यर्थः । पुनरुपन्यासस्तूत्तराविधिविकल्पार्थः ॥ ६ ॥

**यदि त्वरेत पूर्वमग्निमन्ववसाय ततः प्राञ्चमुद्धृत्य जुहुयात् ॥ ७ ॥**

यदि त्वरेत कालातिपत्तिभयादिना तदाऽऽहवनीयमेव गार्हपत्यं परिकल्प्य तत्रैव दक्षिणाग्न्यादीनपि नीत्वा ततः प्राञ्चमाहवनीयमुद्धृत्याग्निहोत्रं जुहुयात् । ततो यदि गार्हपत्य इत्यादिविधिना गार्हपत्यस्योत्पत्तिः ॥ ७ ॥

**जामि तु तद्योऽस्य पूर्वोऽग्निस्तमपरं करोति । अन्यत्रैवावसायाग्निं मथित्वोद्धृत्य जुहुयात् । श्वोऽग्नये तपस्वते जनद्वते पावकवतेऽष्टाकपालं निर्वपेत् ॥ ( ख० ९ ) ॥ ८ ॥**

जामीति पूर्वानिन्दा, उत्तरविधिप्रशंसार्था । पौनःपुन्यनिमित्तमश्रेयस्त्वं जामित्वम् । तत्तु जामि यत्पूर्वमेवाग्निमपरमपि करोतीति । तस्मादन्यत्रैव देशे सहाग्निभिर्ह्रियमाणैर्गत्वा तत्रानुगमयित्वा पूर्वमित्यादिविधिनाऽपरं मथित्वा पूर्ववदेवोद्धृत्याग्निहोत्रं जुहुयात् । ततः श्वोभूते तपस्वतीं निर्वपेत् ॥ ८ ॥

**यस्यापरोऽग्निरनुगच्छेदित्येकेषाम् ॥ ९ ॥**

शाखान्तरोक्तविधिविकल्पः ॥ ९ ॥

**न कालमवधारयाति । ततोऽन्त्राग्निं मथित्वोद्धृत्याभिमन्त्रयत इतः प्रथमं जज्ञे अग्निरित्येतयाऽग्ने सम्राडिषे रय्यै रमस्व सरसे द्युम्नायोर्जेऽ-**

पत्याय संम्राडसि स्वराडसि सुषदा सीद सारस्वतौ त्वोत्सौ. प्रावतामित्युपसमिन्धेऽग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्वारुणं यवमयं चरुम् ॥ १० ॥

अथ वा प्रातरिति न कालविशेषमवधारयेत् । सायं प्रातर्वाऽहुतेऽग्निहोत्रेऽपराम्यनुगतावनुगमयित्वा पूर्वमित्यादिविधिरेव स्यात् । तपस्वत्यास्तु स्थाने वारुणज्योतिष्मन्तौ समानबर्हिषौ निर्वपेदित्यर्थः । तदेवमेते त्रयः कल्पाः प्रातःकाले 'यस्याऽऽहवनीयेऽनुद्धृत इत्यादिविधिना सह विकल्प्यन्ते । अन्त्यस्त्वेकः सायं कालेऽपि । गतमन्यत् ॥ १० ॥

यस्य पूर्वोऽग्निरनुगच्छेदित्येकेषाम् । न कालमवधारयति । तेभ्य एवावक्षाणेभ्योऽधिमन्थितव्यः । अथ यदि न तादृशानीवावक्षाणानि स्युः । भस्मनाऽरणी सꣳस्पर्श्य मन्थितव्यः स्वादेवैनं योनेर्जनयति ॥ अग्नये तपस्वते जनद्वते पावकवतेऽष्टाकपालं निर्वपेत् ॥ यस्याग्निरनुगच्छेदित्येकेषाम् । न कालमवधारयति । तेभ्य एवावक्षाणेभ्योऽधिमन्थितव्योऽथ यदि शल्केध्द्व(द्ध) स्तृणेद्वो(द्धो)वा स्याद्भस्मनाऽरणी सꣳस्पर्श्य मन्थितव्यः स्वादेवैनं योनेर्जनयति। अग्नये तपस्वते जनद्वते पावकवतेऽष्टाकपालं निर्वपेत् ॥ ११ ॥

क्षामावशिष्टानि काष्ठान्यवक्षाणानीत्युच्यन्ते । तेषु मन्थनसमर्थेषु सत्सु तेभ्य एव द्वे गृहीत्वा मन्थेत् । यदि पुनर्न तादृशानि स्युस्तदा तत्तद्भस्मसंस्पर्शी कृत्वा तयोररण्योर्मन्थेत् । एवमरणी संस्कृत्य मन्थनेन स्वादेव योनेर्जनयत्याग्निम् । अवक्षाणाभावे भस्मस्थत्वादग्नेस्तत्स्थस्येदानीमरण्योः संक्रमितत्वाच्च । तात्स्थ्ये च लिङ्गम्— ' अत्र वाव स निलायत' इति । अत एव वचनादवक्षाणाभावे भस्मसंस्कारमन्तरेण मथितोऽप्याग्निः स्वयोन्यनुत्पन्नत्वादसत्सम इत्युक्तं भवतीति । न च गार्हपत्यारण्योराहवनीयमन्थनम् । पृथगरणीष्वग्नीनिति लिङ्गात् । गार्हपत्यस्य तावदियमेवोत्पत्तिः सर्वत्र । प्रायश्चित्तं च तपस्वत्येवासत्यपवादे यथाऽन्वाहितादौ यत्राऽऽहवनीयस्यापि प्रणयनानुपदेशस्तत्रापीयमेवोत्पत्तिः । यथा सावित्रादिषु दर्विहोमेष्वाग्निहोत्रे च होमकाले तथैव पशुष्वपि प्रागन्वाधानादित्यादि, प्रायश्चित्तं च तत्रेदमेवासत्यपवादे यथा यदि होमकाले प्राण उदानमित्यादिना । आप-

स्तम्बस्त्वत्राऽऽह—'यदि गार्हपत्य आहवनीयो वाऽनुगच्छेत्तेभ्य एवावक्षाणेभ्योऽधिमन्थितव्यः' इति। भरद्वाजश्च—'अथैकेषां यतरोऽग्निरनुगच्छेत्तेभ्य एव दारुभ्योऽधिमन्थितव्यः' इत्यादि। 'एवं शकैधे तृणैधे चेत्यापस्तम्बः'। शकानि करीषाण्येधा यस्य स शकैधः। तथा तृणैध इति। शकादीन्धने चाग्नावनुगते भस्मनाऽरणी संस्पर्श्य मन्थितव्यः। तेषामपि मन्थनसामर्थ्यादिति भावः॥ ११॥

**अनुगतेष्टेर्वा स्थान एता आहुतीर्जुहोति॥ ॥ (ख० १०)॥ मित्राय स्वाहा वरुणाय स्वाहा सोमाय स्वाहा सूर्याय स्वाहाऽग्नये तपस्वते जनद्वते पावकवते स्वाहाऽग्नये शुचये स्वाहाऽग्नये ज्योतिष्मते स्वाहाऽग्नये व्रतपतये स्वाहेति व्याहृतिभिर्विहृताभिः समस्ताभिश्च॥ १२॥**

सर्वस्या एवानुगतेष्टेरयं विकल्पः। पुनरनुगतेष्टिग्रहणात्। अन्यथा हि अपि वैता आहुतीरित्येवावक्ष्यत्। तथा सर्वासामेव प्रायश्चित्तेष्टीनामनुग्रहमाहाऽऽश्वलायनः—'अपि वा प्रायश्चित्तेष्टीनां स्थाने तस्यै तस्यै देवतायै पूर्णाहुतिं जुहुयादिति विज्ञायते' इति। बह्वृचाश्च ता एवेष्टीः प्रकृत्याधीयते॥ १२॥

**अथैकेषां विज्ञायते यदि प्रागग्निहोत्रकालादाहवनीयोऽनुगच्छेदन्यं प्रणयेत्॥ १३॥**

केचिदहुत इत्यनेन सकलस्य बाधं मन्यन्ते। तदयुक्तं शाखाभेदादेकोदाहरणाभिप्रायेण सामान्यायोगाच्च। यदि हि तथाऽभिप्रेप्स्येत प्रातर्ग्रहणमेवाकरिष्यत्। न हि माणवकायैकस्मै दधनि दित्सिते तक्रे च कौण्डिन्याय भवति वचनं ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति भवति च तत्र वचनं माठराय दधि दीयतां तक्रं कौण्डिन्यायेति। तथा महाभाष्यकारः—न ह्येकमुदाहरणं सामान्यवचनं प्रयोजयतीति। तस्मादुभयकालार्थमित्येव युक्तम्। अथ को होमकालः। ननूक्ता आनक्षत्रदर्शनादयः कालाः सायंप्रातर्होमयोः सूत्रकृता। तेषु यतमस्मिञ्जुहूषति ततमो भविष्यति प्राग्घोमकालाद्रिति। कोऽर्थः। यदेध्माहरणादि तन्त्रं प्रक्रंस्यते ततः प्रागित्यर्थः। तथा च होमकालमनुवदता कात्यायनेनोक्तम्—'आसन्नेषु चेत्पात्रेष्वाहवनीयोऽनुगच्छेद्गार्हपत्ये जुहुयात्प्राण उदानमप्यगात्' इति। कश्च पात्रासादनकालः। तन्त्रारम्भ इति ब्रूयात्। यथा प्रणयनविध्यनन्तरमाह बौधायनः—'अथैतान्यग्निहोत्रपात्राणि प्रक्षालितान्युत्तरेण गार्हपत्यमुपसादयति' इति। वैखानसभरद्वाजौ तु परिस्तरणानन्तरमाहतुः—'अग्नि-

होत्रपात्राणि प्रयुनक्ति ' इति । तस्मात्प्रणयनकालप्रभृत्या तन्त्रारम्भादा वा परिस्तरणादाहवनीयस्यानुगतावन्यं प्रणीयानुगतेष्टिर्मित्राद्याहुतयो वा । समानोऽयं विधिरंजसोः । अविशेषात् ॥ १३ ॥

यदि होमकाले प्राण उदानमप्यगादिति गार्हपत्ये जुहुयात् ॥ १४ ॥

व्याख्यातो होमकालः पूर्वसूत्रे । तत्र यद्याहवनीयोऽनुगच्छेत्प्राण इत्यादिना गार्हपत्ये प्रायश्चित्तार्थमाज्याहुतिं जुहुयात् । ततो यदि गार्हपत्य आहवनीये वा इत्यादिविधिनाऽग्निमुत्पाद्य प्रकृतिवदग्निहोत्रसमाप्तिः । तथा चात्रैतामाहुतिमुक्त्वा यथानुपूर्व्यकरणमिति कात्यायनः । नात्रानुगतेष्टिः प्रायश्चित्तविशेषवचनात् । नापि विकल्प्यते शाखाभेदात् । यस्याग्निरुद्धृत इति विधिनोद्धरणमप्यस्याऽऽहवनीयस्योद्धार्यस्य लभ्यत इति द्रष्टव्यम् ॥ १४ ॥

यदि गार्हपत्य उदानः प्राणमप्यगादित्याहवनीये ॥ १५ ॥

व्याख्यातः पूर्वम् । नात्र यस्याऽऽहवनीयेऽनुद्वात इत्येष विधिरिष्यते, जीवन्तमाहवनीयं कृत्वा तत्र होमवचनात् । यस्तु अथैकेषां यस्याग्निरनुगच्छेन्न कालमवधारयेत् , इति विधिः स त्वत्रापि भवत्येव सार्वकालिकत्वात् ॥ १५ ॥

यदि दक्षिणाग्निर्व्यान उदानमप्यगादिति गार्हपत्ये ॥ १६ ॥

एवं हुत्वैव प्रविशानीति यथायोन्युत्पाद्याऽऽधेयः ॥ १६ ॥

यदि सर्वेऽनुगच्छेयुरग्निं मथित्वा यां दिशं वातो वायात्तां दिशमाहवनीयं प्रणीय वायवे स्वाहेति जुहुयात् ॥ १७ ॥

होमकालेऽनुगतौ सर्वेषां गार्हपत्यं मथित्वा निधायानुवातमाहवनीयमुद्धृत्य वायवे स्वाहेत्याहुतिं जुहुयात् । ततो यथास्थानं विहृत्याग्नीन्कृतान्तादारभ्य कर्मसमाप्तिः । कात्यायनस्तु वायव्यामाहुतिमपि यथास्थानमुद्धृत्य तस्मिन्नग्नावेवाऽऽह यथा सर्वे चेत् तूर्णं मथित्वा प्रतिवातमुद्धृत्य वायव्यामाहुतिं हुत्वा यथानुपूर्व्यकरणम्, इति ॥ १७ ॥

यदि निवातेऽनुगच्छेयुरग्निं मथित्वा विहारं साधयित्वाऽपरेणाऽऽहवनीयमुपविश्य स्वयमग्निहोत्रं पिबेत् ( अग्निहोत्रप्रत्याम्नायो भवतीति विज्ञायते । )॥ १८ ॥

यदि निवाते सति सर्वेऽनुगच्छेयुस्तदा गार्हपत्यं मथित्वा यथास्थानमेव विहारं साधयित्वा यथाविधि संस्कृतमग्निहोत्रमपरेणाऽऽहवनीयमुपाविश्य यजमानः स्वयं पिबेत् । पानस्य च होमप्रत्याम्नायत्वान्न पुनर्होमः । होमकालादन्यत्र सर्वानुगतावनुगतिक्रमेण तस्य तस्याग्नेर्यथाविहितमुत्पत्तिः प्रायश्चित्तं च । क्रमानवगमे त्वाधानक्रमेणेति द्रष्टव्यम् ॥ १८ ॥

यद्यस्तमिते जुहुयात् । पुनरेवास्तमिते जुहुयात् ॥ १९ ॥

प्रागस्तमयाद्धोमे साङ्गस्य होमस्याऽऽवृत्तिः । अकाले कृतस्याकृतत्वात्प्रधानकालत्वाच्चाङ्गानाम् । न तु प्रणयनस्याऽऽवृत्तिः । काल एव तस्य कृतत्वात् । तत्र तु हुत्वाऽप उपस्पृश्येत्येतावति कृते भवतं नः समनसावित्युपतिष्ठेत । गार्हपत्याहवनीयाविति शेषः । मन्त्रलिङ्गाच्च ॥ १९ ॥

यदि महारात्रे जुहुयात् । पुनरेवोषसि जुहुयात् ॥ २० ॥

उषसि जुहूषतः । प्रागुषसो होमोऽप्येवमौषसः पुनर्होम उपस्थानं च हुत्वैतयैवोपतिष्ठेत ( आप० श्रौ०९-३-१० ) इत्यापस्तम्बोऽप्यसूत्रयत ॥ २० ॥

अग्नयेऽग्निवते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नावग्निमभ्युद्धरेयुः ॥ २१ ॥

यस्याऽऽहवनीये विद्यमाने तमसन्तं बुद्ध्वा तस्योपर्यन्यं प्रणयेत् तस्यैतामिष्टिं निर्वपेत् । ननु—किमप्युद्धरणमात्रप्रयुक्तमिदं प्रायश्चित्तमाहोस्विदभिप्रणयनप्रयुक्तमिति न ज्ञायते । उद्धरणशब्दस्योभयत्रापि दर्शनात् । तत्र यद्यभ्युद्धरणमात्रप्रयुक्तं ततोऽभ्युद्धृत्याग्निं मध्ये तत्त्वं विदित्वाऽनिहितवतोऽपि प्रायश्चित्तं स्यात् । विपर्यये तु न स्यात् । अतो वक्तव्यो विशेषः । तत्राऽऽहाऽऽपस्तम्बः—' यथा कथा चाभ्युद्धरेयुः प्रायश्चित्तमित्याश्मरथ्यः । यद्यसंन्युप्ते स्पाशयेयुरनुगमयेयुरेनं न प्रायश्चित्तमित्यालेखनः ' ( आप० श्रौ० ९-३-१० ) इति । अस्तु वाऽभिप्रणयनं मा वा । यदि कथंचिदभ्युद्धरेयुर्भवत्येवेदं प्रायश्चित्तमित्याश्मरथ्यमतम् । आलेखनस्तु मन्यते 'यद्यनिहितेऽग्नौ स्पाशयेयुर्जानीयुस्तत्त्वं तदैनं पश्चादुद्धृतमग्निमनुगमयेयुर्नतु भवत्येव प्रायश्चित्तम् '। सर्वप्रायश्चित्तमात्रं श्रूयते । अप्राप्तस्योद्धरणमिति । यत एतदुभयमप्याचार्याणां मतं ततो यथाकामी तयोरिति भावः । कर्मार्थिन्यभ्युद्धरणविषयश्चायं विधिर्निर्दिष्टभागो वा । एतयोरन्योऽनिर्दिष्टभागोऽन्य इति लिङ्गात् । तेनापवृत्तकर्मण्यन्यार्थमुद्धृतेऽग्नौ संन्युप्ते लौकिकाग्निसंसर्गनिमित्तेष्टिरेव कार्या नाभ्युद्धरणनिमित्ता ॥ २१ ॥

भवतं नः समनसावित्यभिमन्त्रयेत ॥ २२ ॥

गतार्थम् ॥ २२ ॥

अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेत् । यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेदपर आदीप्यानुद्धृत्य इत्याहुस्तत्तथा न कार्यं यद्भागधेयमभिपूर्वं उद्ध्रियते किमपरोऽभ्युद्ध्रियेतेति तान्येवावक्षाणानि संनिधायेतः प्रथमं जज्ञे अग्निरिति मन्थेत् ॥ २३ ॥

ब्राह्मणे तु 'अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेत् ' ( तै० सं २ । २ । ४ ) इति प्रकृत्य प्रणयनं निषिध्य निन्दित्वा च पुनरितः प्रथममित्येतया मन्थनमुक्तम् । तत्र प्रणयननिन्दानिषेधयोर्मन्थनविधिप्रशंसार्थत्वात्प्रणयनमन्थनयोर्विकल्प इति सूत्रकाराभिप्रायः । तत्र च लिङ्गम्—' तं हैतमेके पशुबन्ध एवोत्तरवेद्यां चिन्वीत ' इति ब्राह्मणव्याख्याता विकारास्ताननुक्रमिष्यामः । ' पशुबन्धे सोमे सत्रे सर्ववेदसे वा ' इति ब्राह्मणनिषिद्धस्यैव पशुबन्धस्य विकल्पतयाऽनुस्मरणम् । तथा दध्नोऽवदाय शृतस्यावद्यति एतद्वा विपरीतम् । तथा पत्नीं संनह्यति तिष्ठन्तीं वा, इत्यादि द्रष्टव्यम् । अयं च विधिः ' अहुतेऽग्निहोत्र इति वचनादापूर्वाहुतेर्होमकालविषयैः सर्वैरपि पूर्वोक्तैर्विधिभिर्विकल्प्यते । ' यस्याग्निरुद्धृत इति वचनाच्च नाजस्रेऽग्नौ भवति ॥ २३ ॥

त्रयस्त्रिꣳशत्तन्तवो ये वितत्निर इति जुहुयात् ॥ २४ ॥

अथाऽऽहुतिं जुहुयादित्यापस्तम्बः । अथानुगतेष्टेरनन्तरं मित्राद्याहुतीनां वा त्रयस्त्रिꣳशत्तन्तव इत्याहुतिः ॥ २४ ॥

यदि कृष्णशकुनिर्ध्वꣳसयन्नुपर्युपर्यग्निहोत्रमतीय( तिप )ते( त् ) । यस्याग्निहोत्रेऽधिश्रिते हविषि वा निरुप्ते पुरुषः श्वा रथोऽनो वाऽन्तराऽग्नी वीयात् ॥(ख०११)॥ गौर्वराह एडको वा । तत्रापोऽन्वतिषिच्य गामन्वत्याऽऽवर्तयेत्( वर्धतां भूतिर्दध्ना घृतेन मुञ्चतु यज्ञो यज्ञपतिमꣳहसः स्वाहेति ) ॥ २५ ॥

कृष्णशकुनिः कपोतो वायस इत्येके । ध्वंसयंस्त्रस्तयन्नुपर्युपर्यग्निहोत्री गौस्तामतीयते । यस्य सांनाय्येऽधिश्रितेत्यापस्तम्बः । पुरुषो मनुष्यजातीयः । अनः शकटम् । गौरारण्योद्भवा । वराहः प्रसिद्धः । ग्रामसूकर इत्येके । एडको मेषः । क्रमेलक

इत्यन्ये । यद्येषामन्यतमः सर्वो वा हविरुत्पत्तिप्रभृत्या प्रदानादन्तरा गार्हपत्याहवनीयौ गच्छेत्तदाऽत्र पुरुषादिगते मार्गेऽपोऽन्वतिषिच्य तानतिक्रान्तानन्वपः सिक्त्वा गामन्वत्य गां सर्वतोऽनुगमय्याऽऽवर्तयेत् । यत एव गमितस्तत एव प्रतिगमयेदित्यर्थः । गामन्तरेणातिक्रमयेदित्याश्वलायनः ॥ २५ ॥

गार्हपत्याद्भस्माऽऽदायेदं विष्णुर्विचक्रम इति वैष्णव्यर्चाऽऽहवनीयादूध्वश्सयन्नुद्द्रवेदेतयैव भस्मना पदमपि वपति । वर्त्म च लोपयेत्पदं च ॥ २६ ॥

वर्त्म समूहेत् , अनोरथयोर्वर्त्मनी समीपदेशेन समी कुर्यात् । पदं वा लोभ(प)येत् । पुरुषादीनां पदरूपं नाशयेत् । गार्हपत्यभस्मना पदमभिवपेत् । देवाञ्जनमिति षडाहुतीर्हुत्वेत्यापस्तम्बभरद्वाजौ ॥ २६ ॥

यद्यनो रथो वाऽन्तराऽग्नी वीयादित्येकेषाम् । न कालमवधारयति । अनुगमयत्याहवनीयं यदग्ने पूर्वं प्रभृतं पद९ हि ते रश्मीनन्वाततान । तत्र रयिष्ठामनुसंभरैत९ सं नः सृज सुमत्या वाजवत्या । त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः । त्वया यज्ञं वितन्वत इत्यन्यं प्रणीयाग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् । अथोऽन्तिकाद्बर्हिराहरेदनड्वान्दक्षिणा ॥ २७ ॥

सामान्यवचनात्सार्वत्रिकोऽयं विधिः । पूर्वविधिविषये तु तेन बाध्यते । तथा यद्यनो रथो वाऽन्तराऽग्नी सदो हविर्धाने वा वीयात्पाथिकृतीं पूर्ववन्निर्वपेदिति सौमिकेनापि बाध्यते तस्यापि सदोहविर्धाननिर्माणादूर्ध्वभावित्वेन विशिष्टविषयत्वात् । अथवा विकल्प एवास्य द्वाभ्यां न सामान्यविशेषभावः शाखाभेदात् । तथा च भरद्वाजवैखानसाभ्यां पूर्वविधिमुक्त्वाऽन्तरमुक्तम् । ‘ यद्यनो वाऽन्तराऽग्नी वीयादित्येकेषाम् । न कालमवधारयति ’ इति । समानोऽयं विधिरजस्रेऽप्यविशेषात् । बह्वृचस्त्वत्राधीयते—‘यस्य गार्हपत्याहवनीयावन्तरेणानो वा रथो वा श्वा वा प्रतिपद्येत का तत्र प्रायश्चित्तिः ’ इति । नैनन्मनसि कुर्यादित्याहुरात्मन्यस्य हिता भवन्ति, इति । तच्चेन्मनसि कुर्वीत

गार्हपत्यादविच्छिन्नामुदकधारां हरेत्, तन्तुं तन्वन्रजसो भानुमन्विहीत्याहवनीयात् । सा तत्र प्रायश्चित्तिः, इति । पूर्ववदिति यथाऽन्तिकाद्बर्हिराहरेदनड्वान्दक्षिणेति विधिनेत्यर्थः ॥ २७ ॥

एतामेव निर्वपेत् । स्तोत्रे मूढ एताꣳ शस्त्र एताम् ॥ २८ ॥

स्तोत्रशस्त्रयोरवयवस्याप्रतिभानमन्यथाप्रतिभानं वा मोहः । तत्राप्येतामेवेष्टिं निर्वपेत् । यद्या समासेरप्रतिसंहिते भवतः । प्रतिसंधाने तु नेष्यते । सर्वाप्रतिभाने तु हुत्वा सर्वप्रायश्चित्तं तदेव प्रतिभावद्भिः प्रतिभावनीयम् ॥ २८ ॥

यस्य वाऽग्निभिरग्नीन्व्यवेयुर्यो वा व्यवेयात् ॥ २९ ॥

एतामेव निर्वपेदित्यनुषङ्गः । अग्निभिरिति जात्याख्यायां बहुवचनं संसर्गित्वाद्वा । यस्याग्नीन्विहृतान्परः स्वेनाग्निना समारूढेनासमारूढेन वा व्यवेयात् । व्यवदध्यात् । तस्येयमिष्टिः । यश्चायं व्यवेयात्तस्यापि लौकिकाग्निना व्यवेताग्नेरपीत्यन्ये ॥ २९ ॥

एतां जने प्रमीतस्य ॥ ३० ॥

जने प्रमीतस्य देशान्तरे मृतस्य मरणश्रवणानन्तरं गृहेष्वेतामिष्टिं निर्वपेत् । भरद्वाजस्तत्रानुग्रहमाह—‘ प्राचीनावीती पूर्णाहुतिं जुहुयादित्येके ’ ( भ० श्रौ० ९-१३ ) इति ॥ ३० ॥

तस्याभिवान्यवत्सायैः पयसा जने प्रमीतस्याग्निहोत्रं जुहुयाद् यावदस्याग्निभिः शरीराणि सꣳस्पर्शयेयुः । य उदञ्चो दर्भास्तान्दाक्षिणाग्रान्स्तृणाति । प्राचीनावीत्यग्निहोत्रं दोहयत्यधस्तात्समिधं धारयति ॥ ३१ ॥

व्याख्याताऽभिवान्यवत्सा । तस्याः पयसाऽग्निहोत्रं जुहुयात्, आ शरीरदाहात् । यद्यपि तद्यावज्जीवं श्रुतं तथाऽपि वचनाद्धूयते, निवर्तते त्वन्यत्सर्वम् । बाह्वृच्ये त्वेवमेव मृताग्निहोत्रमुक्त्वोक्तम्—‘अथाप्याहुरेवमेवैनानजस्रानजुहुत इन्धीरन्ना शरीराणामहर्तोः’ इति । अत्र सर्वं तूष्णीं क्रियेत । इत्यापस्तम्बभरद्वाजावाहतुः । य उदञ्च इति ये पूर्वमग्निहोत्रे परिस्तरणदर्भेषूदगग्रा इत्यर्थः । प्रदर्शनार्थं दोहग्रहणम् । प्राचीनावीत्येव सर्वत्र पित्र्यर्थत्वात् । पित्र्यर्थत्वं चोपरि देवेभ्यो धारयतीति लिङ्गात् ॥ ३१ ॥

उपरि हि देवेभ्यो धारयन्तीति विज्ञायते ॥ ३२ ॥

देवेभ्यो ह्युपरि धार्यते न पितृभ्य इत्यर्थः ॥ ३२ ॥

अपो मृन्मयान(न्य)भ्यवहरन्ति ॥ ३३ ॥

अमैवेत्यापस्तम्बः । सर्वाण्यप्सु क्षिपेत् ॥ ३३ ॥

ददत्येवाऽऽयसानि ॥ ३४ ॥

यदयोमयमसिदः स्वधितिरित्यादि तद्दहत्येव । ददाति वा चिनोति वेतरयज्ञायुधानीति भावः । परमतनिरासार्थं वाऽवधारणम् । यथाऽऽह भरद्वाजः—पुत्रस्य दृषत्स्यादायसं च इति ॥ ३४ ॥

ब्राह्मणाय यज्ञायुधानि दद्यात् ॥ ३५ ॥

पात्रप्रतिपत्तिकाले तानि पत्नी पुत्रो वा ब्राह्मणाय श्रोत्रियाय दद्यात् । दानवचनादेवं ज्ञायते प्रतिग्रहीतुरप्युपयोज्यान्येवेति ॥ ३५ ॥

अमैव पुत्रस्य दृषत् ॥ ३६ ॥

अमैव सहैव दृषत्पट्टः, दृषदुपलाश्मादि पुत्रस्य स्यादित्यर्थः । तथा चाश्ममयानीत्येव कात्यायनः ॥ ३६ ॥

यद्यप्रमीतं प्रमीत इति शृणुयादग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेत् ॥ ३७ ॥

अमृतं मृतमुपश्रुत्य पुनरमरणे निर्णीते, अग्नये सुरभिते निर्वपेत् ॥ ३७ ॥

यदि पूर्वस्यामाहुत्याᳲ हुतायां यजमानो म्रियेत दक्षिण उत्तरामाहुतिं निनयेत् ॥ ३८ ॥

उत्तराहुत्यादेः कर्मशेषस्य मृतहोमन्यायेन समाप्तिर्वेदितव्या ॥ ३८ ॥

भस्मोत्करं वा गमयेत् ॥ (ख० १२) ॥ ३९ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चदशप्रश्ने तृतीयः पटलः ।

यत्राग्नीनां भस्मराशिर्निहितस्तत्र वा निनयेदित्यर्थः ॥ ३९ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां पञ्चदशप्रश्ने तृतीयः पटलः ॥

=====

अथ पञ्चदशप्रश्ने चतुर्थः पटलः ।

---

यद्याज्यमनूत्पूतᳲ स्कन्देच्छिन्दद्देयं वरो देय इत्येकेषाम् । यद्युत्पूयमानं स्कन्देच्छिन्दत्प्राणि

दद्यात् ॥ यद्युत्पूतं चित्रं देयम् ॥ १ ॥

छिन्दत्प्राणीति यत्तृणादीनि दन्तैश्छिन्दद्भक्षयति तदेव गवाजादि दद्यात्, न बालमित्यर्थः। चित्रं हृदयंगमं धनमिति शेषः। तथा चित्रं धनमित्येव भरद्वाजः। वरो देय इत्येकेषाम्, इत्यापस्तम्बः ॥ १॥

यदस्य गृहे पुष्कलꣳ स्यात्तद्दद्यात् ॥ २ ॥

यदस्य गृहे पुष्कलं सुलभं यवव्रीह्यादि तद्दद्यात् ॥ २ ॥

यदि स्रुग्गतं भूपतये स्वाहेति तत्प्राञ्चं प्रादेशं निदध्यात्। भुवनपतये स्वाहेति दक्षिणतः। भूतानां पतये स्वाहेति प्रत्यञ्चं भूताय स्वाहेत्युदञ्चम्। भूर्भुवः सुवरित्यूर्ध्वं सं त्वा सिञ्चामीति तत्सꣳसिञ्चत्यभिमन्त्रयते वा ॥ ३ ॥

यदि स्रुग्गते स्कन्ने पुष्कलं दत्त्वा सं त्वेति संसिच्याभिमन्त्र्य वा ततः प्रादेशाः। ततस्तत्स्रुचः स्कन्नं स्रुचि संसिञ्चेत् स्रुचि पुनर्निक्षिपेत्। संसेकायोग्यत्वेऽभिमन्त्रयेत। केचित्तु—यदा तु देवाञ्जनमगन्यज्ञ इत्याभिमन्त्रणं तदा प्रादेशा न भवन्ति। न च पुष्कलदानादि। निगदव्याख्यातश्चायमर्थः कल्पान्तरेषु ॥ ३ ॥

यज्ञस्य त्वा प्रमयाऽभिमया प्रतिमयोन्मया परिगृह्णामीति परिगृह्णाति ॥ ४ ॥

ततः स्कन्नं परिगृह्णाति, परितश्छिन्नेनापभज्य तस्य देशं तस्योपरि प्रतिदिशं प्रादेशान्मिमीते। तस्मात्प्रतिदिशमित्यन्ये। प्रदेशिन्यङ्गुष्ठयोः प्रसारितयोरायामः प्रादेशः। पूर्वतरविधिशेषश्चायं न सर्वविधिशेषः। प्रासङ्गिकत्वात्तस्य। तेन स्रुग्गते स्कन्न इत्यर्थः ॥ ४ ॥

देवाञ्जनमगन्यज्ञ इत्येकेषामनन्तरमाज्याद्वदति ॥ ५ ॥

एकेषां शाखा। आज्यादनन्तरमाज्यमधिकृत्य देवाञ्जनमगन्यज्ञ इत्याज्यस्कन्नाभिमन्त्रणं वदतीत्यर्थः। कुत एतदभिमन्त्रणं वदतीति चेत् तस्यैवानन्तरवचनात्, देवाञ्जनमगन्यज्ञ इत्येतैर्यथापूर्वमभिमन्त्र्येति लिङ्गाच्च। तथा देवाञ्जनमगन्यज्ञ इत्येतदभिमन्त्रयेतेत्येकेषामित्येव भरद्वाजः। एतदुक्तं भवति न केवलं स्रुग्गते, किंतु सर्वत्रैवाऽऽज्ये स्कन्ने देवाञ्जनमगन्यज्ञ इत्येतैर्मन्त्रैरभिमन्त्रणं तैरतैर्विधिभिर्विकल्प्यत इति ॥ ५ ॥

भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेति स्कन्नमनुमन्त्रयेतेति सर्वहविषामनवयवेन श्रूयते ॥ ६ ॥

सर्वेषामेव हविषामर्थे श्रूयते नतु किंचिद्विशेषमवयुत्येत्यर्थः । केचित्त्वाहुः–सर्वहविषामित्यैष्टिकसर्वहविरभिप्रायं दर्शपूर्णमासप्रकरणे श्रुतत्वात् । अनवयवेनेत्यनेनापि तेष्वेव विषयकार्त्स्न्यं विवक्षितमिति । तत्र त्वाह भरद्वाजः––'भूपतये स्वाहेति स्कन्नमनुमन्त्रयेतेत्येकेषाम् । न किंचन हविरधिकृत्य वदति ' इति । तच्चेदमविशेषवचनं यत्राप्युक्तमभिमन्त्रणान्तरं तत्रापि तेन विकल्प्यते । समुच्चीयत इत्यन्ये । यथा देवाञ्जनमगन्यज्ञ इत्यादौ । यत्र त्वनुक्तं तत्र नित्यमेवेष्यते । 'यथा यस्य हविर्निरुप्तं स्कन्देद्यस्य वा देवतायै गृहीतमहुतम्' इत्यादौ । न बर्हिषि स्कन्ने हविषि प्रायश्चित्तमिष्यते, अस्कन्नꣳ हि तद्यद्बर्हिषि स्कन्दति । इति श्रुतेः । तत्र त्वाह भरद्वाजः—'न बर्हिषि स्कन्ने प्रायश्चित्तमित्याश्मरथ्यः । यदि भूमिं प्राप्नुयात्कुर्यादेव तत्र प्रायश्चित्तमित्यालेखनः' ( भ० श्रौ० ९–१३ ) इति ॥ ६ ॥

यदि कपालं नश्येदाश्विनं द्विकपालं निर्वपेद्द्यावापृथिव्यमेककपालम् । भार्गवो होता भवति । एकहायनो दक्षिणा ॥ ७ ॥

' प्रयुक्तानां प्रागर्थकर्मणः ' इत्यापस्तम्बः । अथ यदि कर्मणि प्रयुक्तानां मध्ये प्रागर्थकर्मणः पुरोडाशाधिश्रयणात्कपालं नश्येन्न दृश्येत तदैतां द्विहविष्कां निर्वपेत् । तस्यां तु ऋत्विङ्नियमात् प्रासङ्गिकत्वाच्च । तन्त्रिण एव होतारं भृगुवंश्यमागमयेत् । अविरोधाद्दक्षिणायाश्च समुच्चयः ॥ ७ ॥

यदि भिद्येत गायत्र्या त्वा शताक्षरया संदधामीति तत्संधायाभिन्नो घर्म इत्यभिमन्त्र्यापोऽभ्यावहृत्याथान्यत्कपालꣳ सꣳस्कृत्य तद्वा पिष्ट्वाऽन्यया मृदा करणीयया कृत्वा घर्मो देवाꣳ अप्येत्विति कपालेष्वपि सृजति ॥ यदि प्रागुपधानाद्भिद्येत ॥ ८ ॥

यदि कर्मणि प्रयुक्तं कपालं भिद्येत तत्संधानार्थैर्द्रव्यैः संधाय मनो ज्योतिरित्यापस्तम्बीये संधानलिङ्गया तदभिजुहुयादित्युक्तम् । समानोऽयं विधिरेकदेशभेदेऽपि यथोक्तं न्यायविद्भिरर्थसमवायात्प्रायश्चित्तमेकदेशेऽपीति । भूमिर्भूमिमगादित्यध्वर्योर्निव-

र्तते प्रत्याम्नानात् । ब्रह्मा तु तेनाभिमन्त्रयत एव । अन्यत्कपालं दर्भेषु प्रयुज्य तत एकवदूहेन संमृश्यैवं प्रोज्झ्य धर्मो देवा९ अप्येत्विति भिन्नस्य स्थाने क्षिपेत् प्रागुपधाना-च्चेत्तद्भिन्नं भवति ॥ ८ ॥

**अथ यद्युपहितानामेतेनैव मन्त्रेणोपदध्यात् ॥ ९ ॥**

परतस्तूपधानाद्भेदेऽन्यत्संस्कृतमेतेनैव मन्त्रेणोपदध्यादित्येतावान्विशेषः । समानम-न्यत्संधानादि ॥ ९ ॥

**वैश्वानरं द्वादशकपालं निर्वपेद्यदि पत्नी संयाजयन्त्कपालमभि जुहुयात् ॥ १० ॥**

प्रासङ्गिकत्वमस्यापि तन्त्रमध्यपातादद्रष्टव्यम् ॥ १० ॥

**एतामेव निर्वपेत्पुत्रे जात एतामेव निर्व-पेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपाद(त)येत् ॥ ११ ॥**

व्याख्यातोऽयं विधिः पथिकृद्विधिना ॥ ११ ॥

**एतामेव निर्वपेद्यदनिष्ट्वाऽऽग्रयणेन नवस्याश्नीयात् ॥ १२ ॥**

नानिष्ट्वाऽऽग्रयणेनाऽऽहिताग्निर्नवस्याश्नीयादित्युक्तम् । तदतिक्रमेऽप्येषैव प्राय-श्चित्तिः ॥ १२ ॥

**आनीतो वा एष देवानां य आहिताग्निरदन्त्यस्य देवा अन्नम् । यदकृत्वाऽऽग्रयणं नवास्याश्नीया) देवेभ्यो(वानां) भागं प्रतिक्लृप्तमद्यादार्तिमा-र्छेत् ॥ १३ ॥**

अथानेन प्रायश्चित्तनिमित्तस्य प्राशनस्य निन्दा प्रदर्श्यते, प्रायश्चित्तादरार्थम् । देवानां ह्येष संबन्धमानीतो योऽग्नीनाधत्ते, भागलिप्सुभिर्देवैः स्वीयत्वेन परिगृहीत इति यावत् । तस्मादतः परमस्यान्नं देवा भुञ्जते । तत्र यदि ताननिष्ट्वा स्वयं नवमश्नीयात् देवेभ्य एव भागतया क्लृप्तमग्रपाकमाशितवान्स्यात् ततश्चाऽऽर्तिं प्राप्नुयात् । तस्मादशन-निषेधं नातिक्रामेत् । अतिक्रम्य त्ववश्यमेतां निर्वपेत् । निरुप्य चैनां स्वे काले पुनरा-ग्रयणेन यजेत अशननिमित्तत्वादस्याः कालातिक्रमे च पुनः पाथिकृतवैश्वानरौ प्रागेव दर्शितौ ॥ १३ ॥

**मारुतं त्रयोदशकपालं निर्वपेद्यस्य पुत्रौ यमौ जायेतां गावौ वा ॥ (ख० १३) ॥ १४ ॥**

पुत्रावात्मसंभवौ 'यमौ जायेयातां गावौ वा पुरुषौ वेत्यापस्तम्बः ॥ १४ ॥

**निर्वीर्यतां वै जातः पुरुष आशास्तेऽपशुतां गौः ॥ १५ ॥**

वीर्यं प्रजननशक्तिः । आशासनमिच्छा । तया च तत्कार्यं करोति । अर्थो लक्ष्येत । तदयमर्थः—पुरुषो यमो जातो वीर्योपघातं करोति । पशुश्चापशुताम् । तस्मादादर्तव्यं प्रायश्चित्तमिति ॥ १५ ॥

**गायत्री पुरोनुवाक्या भवति । त्रिष्टुग्याज्या ॥ १६ ॥**

मरुतो यद्धवो दिवो, या वः शर्मेति । इदं याजुषं हौत्रम् ॥ १६ ॥

**वैष्णवं त्रिकपालमेके समामनन्ति ॥ १७ ॥**

गतः ॥ १७ ॥

**आग्नावैष्णवमेकादशकपालं निर्वपेद्यस्या ( न्य )**
**न्यम( स्या )ग्निषु याजयेयुर्यो वा यजेत ॥ १८ ॥**

यदि प्रमादवशात्परस्याग्निषु परमनवहिता ऋत्विजो याजयेयुस्तत्रेयमिष्टिरुभयोर्यष्टुराग्निमतश्च ॥ १८ ॥

**रौद्रं वास्तुमयं चरुं निर्वपेद्यत्र पशुपतिः पशूञ्छ-**
**मयेत ॥ १९ ॥**

यस्य पशूञ्ज्वरो मारयेत्तस्य तच्छान्त्यर्थं चरुः । वास्तुर्नाम सस्यविशेषः ॥ १९ ॥

**एतया निषादस्थपतिं याजयेत् ॥ २० ॥**

निषादो नाम ब्राह्मणाच्छूद्रायामुत्पन्नः । क्षत्रियादित्यपरम् । स्थपतिर्महत्तरः । निषादश्चासौ स्थपतिश्चेति निषादस्थपतिः । सोऽपि स्वर्गकामोऽनयेष्ट्या यजेत ॥ २० ॥

ननु शूद्रस्य कर्मानर्हस्य कुतः कर्माधिकारः कुतश्च तस्याग्निविद्ये तत्राऽऽह—

**कृष्णाजिनं वा कूटं वाऽकर्णो वा गर्दभो दक्षिणा ।**
**हारिणो वा हरिणतृणाका वा श्यामाकपात्रो वा ।**
**द्वे वावयाम्त्रू शूर्पे शय्यां वा । सा हि तस्येष्टिः**
**॥ २१ ॥**

निषादस्य मृगघातकवृत्तेः स्वकर्मार्थसाधनविशेषः कूटम् । अकर्णः कर्णविकलः । निषादैः कृतपरिचया हरिणवश्यार्थं विसृष्टा हरिणपोतिका हारिणतृणाका । पात्रपूरणाः श्यामाकाः श्यामाकपात्रः । शफकः प्रस्नुतखुरो हरिण इष्यते । सा हि तदुद्देशेन विहिता । अतस्तावत्तस्यामस्ति तस्याधिकारः । सैव च यावदर्थमस्याग्निविद्ये अप्याक्षेप्स्यतीति भावः । लौकिकाग्नाविष्टिरित्येके । तत्र हविष्कृदाधावेति शूद्रस्येत्यादि न विस्मर्तव्यम् ॥ २१ ॥

**यो ब्रह्मचारी स्त्रियमुपेयात्स गर्दभं पशुमालभेत ॥ २२ ॥**

आहिताग्नेर्ब्रह्मचर्यकाले स्त्रियमुपेयुषोऽयं विधिः । आहिताग्न्यधिकारात् । अथवा प्रसिद्धब्रह्मचारिण एव ग्रहणं रूढेर्बलीयस्त्वात् । वक्ष्यति च धर्मसूत्रे—' गर्दभेनावकीर्णी निर्ऋतिं पाकयज्ञेन यजेत ' इति । न चैवमस्याऽऽनर्थक्यं देवताविकल्पार्थत्वात् । न चाऽऽहिताग्न्यधिकारे वचनानुपपत्तिः, देवताभेदे श्रौतप्रयोगविधानार्थत्वेनोपपत्तेः । तस्माद्ब्रह्मचर्यार्थत्वेऽपि न दोषः । तदुक्तं भरद्वाजेन—' यो ब्रह्मचारी स्त्रियमुपेयादिति कस्यायं वादः । आहिताग्नेरित्येकम । अनाहिताग्नेरित्यपरम् ' इति । तत्र त्वाहिताग्नेर्व्रतपत्यादिप्रायश्चित्तं द्रष्टव्यम् । यथोक्तं सूत्रकृता—' व्रत्येऽहनि मांसं वाऽश्नाति ' । ' स्त्रियं वोपैति ' । ' यदि दीक्षितोऽवकिरेत् ' इत्यादि ॥ २२ ॥

**भूमावेककपालं पशुपुरोडाशꣳ श्रपयति ॥ २३ ॥**

अकपालम् इति(?) वचनाद्भूमिकपालमित्यवचनाच्च कपालधर्मरहितायां भूमौ पुरोडाशं श्रपयेत् ॥ २३ ॥

**अप्स्ववदानैश्चरेयुः ॥ २४ ॥**

वपादिभिरवदानैरप्सु चरेयुः । प्रयाजादिभिरप्यप्स्वेवं प्रचारः, प्रधानसदेशत्वादङ्गानाम् । न चावभृथवद्यत्राऽऽपस्तत्र गच्छन्ति, अपोऽभ्यवहृत्येत्यवचनात् । तेनाऽऽप एवोत्तरवेदिस्थाने स्थापनीया भवन्ति । तत्रावभृथवदेवेध्मादीनामर्थलुप्तानां निवृत्तिर्यथार्थं मन्त्राणामूहश्च द्रष्टव्यः ॥ २४ ॥

**नैर्ऋतः प्राजापत्यो वा । रक्षोदेवत इत्येकेषाम् । यमदेवत इत्येकेषाम् ॥ २५ ॥**

गर्दभ इति शेषः ॥ २५ ॥

**यस्य हविः क्षायति तं यज्ञं निर्ऋतिर्गृह्णाति यदा तद्धविः संतिष्ठेत । अथ तदेव हविः पुनर्निर्वपेत् ॥ २६ ॥**

यस्य हविः क्षायति विदह्यते तं यज्ञमलक्ष्मीर्गृह्णाति न स कार्य इति यावत् । ततश्च क्षामस्य हविष आज्यं प्रतिनिधिं कृत्वा शिष्टैश्च हविर्भिस्तत्कर्म ' तत्सꣳस्थाप्यान्यद्धविस्तद्देवतं निर्वपेत् ' इत्यापस्तम्बभरद्वाजौ । संस्थाप्य तस्मिन्नेव विहारेऽन्यद्धविस्तद्देवतं निर्वपेत् । अन्वाधानादि तेनैव हविषा पुनर्यजेत नान्यैरक्षामैरपीत्यर्थः । तदेव हविर्निर्वपेदित्येव सूत्रकाराभिप्रायः । दोहयोर्दाहे तु वैशेषिकत्वादार्तिप्रायश्चित्तमेवेष्यते ॥ २६ ॥

**यज्ञो यज्ञस्य प्रायश्चित्तिर्यदुच्छिष्टꣳ स्यात् ॥ तेन सꣳस्थापयेत् । यं द्विष्यात्तस्मै तां दक्षिणां दद्यात् । तमेव निर्ऋत्या ग्राहयति ॥ २७ ॥**

पुरोडाशे क्षामेऽयं विधिः पूर्वेण विकल्प्यते । तत्र यदेव क्षामावशिष्टं स्यात्तेनैव यजेत । या तु तस्मिंस्तन्त्रे दक्षिणा तां हविरुच्छिष्टं च दद्यादित्यापस्तम्बभरद्वाजौ । क्षामहविःशेषं च द्वेष्याय दद्यात् । तथा च कृते यज्ञग्राहिणी निर्ऋतिस्तस्मिन् गमिता भवति । ततश्च स एव यज्ञः श्रेयान्संपद्यत इति पुनरिज्याऽपि न कार्येति भावः ॥२७॥

**यथाकथा च क्षायेत्प्रायश्चित्तमेव स्यात् ॥ २८ ॥**

सर्वदाह इत्यापस्तम्बः । यदेतत्क्षामप्रायश्चित्तं तत्सर्वदाह एव भवेत् । नैकदेशदाहे तस्यावर्जनीयत्वात् । यथोक्तं न्यायविद्भिः—' क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात् ' ( जै० सू० ६–४–१७ ) इति ॥ २८ ॥

**यदि वाऽवदानेभ्यो न प्रभवेत् ॥ २९ ॥**

असर्वदाहेऽपि यदा शिष्टं हविरिज्यार्थेभ्योऽवदानेभ्यो न पर्याप्तं स्यात्तदाऽपीष्यते । न कथंचिदवदानेभ्यः पर्याप्तमित्यर्थः ॥ २९ ॥

**यद्यप्रत्तदैवतꣳहविर्व्यापद्येताथान्यत्तद्दैवतꣳ हविरभ्युदाहरेत् ॥ ३० ॥**

अप्रत्तं दैवतमवदानं यस्येति विग्रहः । व्यापत्तिर्दोष इति भरद्वाजः । सा च नाशादिनाऽप्ययोग्योपलक्षणार्था असर्वहविर्विषया च । यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वेत्युत्तरत्र वचनात् । तदस्यां व्यापत्तौ सत्यां यद्दैवत्यं हविर्व्यापन्नं तन्मात्रमन्यन्निर्वपेन्न तु तत्सहभाव्यव्यापन्नमपि हविरन्तरमित्यर्थः । प्रत्तदैवतस्य त्वप्रत्तसौविष्टकृतस्यापि व्यापत्तौ न पुनरुत्पत्तिः । अप्रत्तदैवतमिति वचनादप्रयोजकत्वाच्च । तथा प्राक्स्विष्टकृत इत्येवाऽऽश्वलायनः । तथाऽवदानदोषे पुनरायतनादवदानमिति च । सांनाय्यव्यापत्तौ त्वार्तिप्रायश्चित्तमेवेष्यते, वैशेषिकत्वाच्च । वक्ष्यति ' स्रुगादानप्रभृतयो मन्त्राः ' इति । तद्विकारव्यापत्तिरपि तेनैव व्याख्याता । तत्र त्वाह भरद्वाजः—सांनाय्यप्रायश्चित्तान्यामिक्षायां न विद्यन्ते । यद्यन्यतरद्व्यापद्येत यत एव कुतश्चोत्पाद्य प्रचरेत् । यद्युभयं व्यापद्येतान्येन दध्ना पयसा वा यजुषोत्पूतेन प्रचरेत् । आज्येन वाजिने व्यापन्न इति ॥ ३० ॥

**तत्र स्रुगादानप्रभृतयो मन्त्रा आवर्तेरन् ॥ ३१ ॥**

स्रुगग्निहोत्रहवण्यादीयते येन स मन्त्रः स्रुगादानः । समन्त्राणामेव कर्मणामावृत्तिसिद्धौ मन्त्रवचनमुत्तरविधिविकल्पार्थम् ॥ ३१ ॥

(यावदन्ते वा व्यापद्येत ॥ ३२ ॥

यावदन्ते कर्मणि कृते व्यापत्तिर्जाता ततः परभाविन एव मन्त्राः प्रयुज्येरन् । पूर्वभाविनां तु सकृत्प्रयोगादेव सिद्धः कर्मोपकारः । त एव वा पूर्वप्रयुक्ताः स्वैः स्वैः कर्मभिरावर्तमानैः संपत्स्यन्त इति भावः ॥ ३२ ॥ )

यदि तु प्रत्तदैवतमाज्येन शेषꣳ सꣳस्थापयेत् ॥ ३३ ॥

यदि प्रत्तदैवतं ततः स्विष्टकृदादि शेषमाज्येन निर्वर्तयेत् । न तु हविरन्तरमागमयेद्धोपयेद्वेत्यर्थः । यदा तु प्रत्तदैवतमपि प्रागेव प्रदानाद्दुष्टमिति ज्ञायते तदा तु पुनरुत्पत्तिरेवासत्कल्पत्वात्प्रदानस्य । अत्र त्वाह कात्यायनः—'अदोषो वा न वै देवाः कस्माच्चन बभित्सन्ते इति श्रुतेः, इति ॥ ३३ ॥

यस्य सर्वाणि हवीꣳषि ॥ (ख० १४) ॥ नश्येयुर्वा दुष्येयुर्वाऽपहरेयुर्वाऽऽज्येन देवताः प्रतिसंख्याय यजेत ॥ ३४ ॥

यस्य त्वेकाद्विबहुषु तन्त्रेषु यावत्संभवं सर्वाण्येवाप्रत्तदैवतानि हवींषि नश्येयुर्दाहादिना दुष्येयुर्वा केशकीटादिनाऽपहरेयुर्वा तानि दस्यवस्तदा यासां हविर्व्यापन्नं ता देवताः प्रतिसंख्याय प्रदानार्थं गणयित्वा ध्रौवाज्येन प्रतिनिधिना यथाप्रकृत्येव यजेत, नोपांशुधर्मेण प्रतिनिधेस्तद्धर्मवचनात् । पशुधर्माज्यं भवतीति लिङ्गाच्च । आज्यानामपि व्यापत्तौ स्वात्स्वाद्योनेः स्वैः स्वैर्मन्त्रैः पुनर्गृहीत्वा यजेत ॥ ३४ ॥

अथान्यामिष्टिमनुल्बणां तन्वीत । यज्ञो हि यज्ञस्य प्रायश्चित्तिः ॥ ३५ ॥

अथ संस्थितायामिष्टौ तामेवेष्टिं पुनरनुल्बणामविकृतां कुर्वीत । यतो यज्ञस्याऽऽर्तस्य पुनरिज्यैव प्रायश्चित्तिः । तत्र तु सर्वहविर्व्यापत्तिविषये सांनाय्ययोरप्ययमेव विधिर्वैशेषिकत्वादिष्यते, नाऽऽर्तिप्रायश्चित्तम् । आश्वलायनमतात्त्वावाहनादूर्ध्वमेवायं विधिः । यथा हविषां व्यापत्तावेल्हासु(?) देवतास्वाज्येनेष्टिं समाप्य पुनरिज्येति । तथा हविरावृत्तिं प्रकृत्याऽऽह प्रागावाहनाच्च दोष इति । तथाऽप्यत्यन्तं गुणभूतानामिति च । गुणभूतानामपि हविषामत्यन्तमावाहनात्प्रागूर्ध्वं च सर्वदाहे हविरावृत्तिः । नेज्यावृत्तिरित्यर्थः ॥ ३५ ॥

अपो व्यापन्नꣳ हविरभ्यवहरतीति विज्ञायते ॥ ३६ ॥

व्यापन्नं तु हविरप्सु क्षिपेत् ॥ ३६ ॥

ननु किमेतद्व्यापन्नं नाम । तत्राऽऽह—

यदार्याणामभोजनीयं स्यान्न तेन यजेत ॥ ३७ ॥

अयमभिप्रायः—यागानर्हतापत्तिर्व्यापत्तिः । सा चाऽऽर्यभोजनानर्हत्वलक्षणो दोषः। न तेन दुष्टपर्यायेण व्यापन्नेन यजेत । तदप्स्वेव क्षिपेदिति । तथा चापो दुष्टं हविरभ्यवहरन्तीति प्रकृत्याऽऽह भरद्वाजः—'कथं दुष्टं हविः स्यात् । यदार्याणामभोजनीयं न तेन देवान्यजेत ' इति । तथा शिष्टभक्षप्रतिषिद्धं दुष्टमित्याह कात्यायनः । आश्वलायन श्चाऽऽह—व्यापन्नानि हवींषि केशनखकीटपतङ्गैरन्यैर्वा बीभत्सैरिति ॥ ३७ ॥

यद्धविर्दुःशृतं यमदेवत्यं तद्यममेव गच्छतीति सꣳस्थाप्य तदन्वाहार्यपचने चतुःशरावमोदनं पक्त्वा चतुरो ब्राह्मणान्भोजयेत् ॥ ३८ ॥

हविर्ग्रहणाच्चरुपुरोडाशेष्वयं विधिरिति गम्यते नेतरविकारेषु । यदपक्वं विषमपक्वं वा तद्दुःश्रृतम् । तत्तस्यै देवतायै हुतमपि यमदेवत्यं भूत्वा यममेव गच्छति । तस्मात्तदारब्धं कर्म तेनैव हविषा संस्थाप्य ततश्चतुःशरावं पक्त्वा चतुरो ब्राह्मणान्भोजयेत् । एतदेवास्य प्रायश्चित्तमित्यर्थः ॥ ३८ ॥

तेषां भार्गव एकः प्राशितृणाꣳ स्यात्तेभ्यः समानो वरो देयः । सा प्रायश्चित्तिः ॥ ३९ ॥

एकस्य भार्गवनियमान्नर्त्विङ्नियमो भोक्तृषु ॥ ३९ ॥

योऽदक्षिणेन यज्ञेन यजेत । स यज्ञः प्रक्षामोऽनायु[रु]र्वरा प्रतिष्ठिता देया सा प्रायश्चित्तिः ॥ ४० ॥

दक्षिणाविशेषानाम्नाने यदि यत्किंचिदोदनाद्यदत्त्वा यजेत स यज्ञः प्रक्षामो दग्ध इव भवति निर्वीर्यत्वादनायुरिव च भवति । 'यज्ञ आयुष्मान्स दक्षिणाभिः' इति श्रुतेः । अथ वा–अनायुरनायुष्यं च यजमानस्य स्यादित्यर्थः । तथाऽनायुर्यजमानः स्यादिति वैखानसभरद्वाजौ । तत्राभिप्रेतदक्षिणातुल्यमूल्यामुर्वरां दद्यात् । सर्वसस्याढ्या भूरुर्वरा ॥ ४० ॥

यद्यादिष्टां दक्षिणामन्तरियादुर्वरां दद्यात्सा प्रायश्चित्तिः ॥ ४१ ॥

अथ यदि चोदितामेव दक्षिणामदत्त्वा यजेत तत्रापि तत्तुल्योर्वरादानमेव प्रायश्चित्तं नेतरादित्यर्थः ॥ ४१ ॥

यद्यभागां देवतामावाहयेदाज्येनैनां यथोढां यजेत । पुरस्ताद्वा स्विष्टकृतः ॥ ४२ ॥

यद्यचोदितां देवतामावाहयेत्तां यथोढां यस्मिन्क्रम आवाहिता तस्मिन्नेव क्रमे यजेत हुतेषु वा नारिष्ठेषु । सा चाऽऽज्यहविष्ट्वादुपांशुधर्मेण यष्टव्या । आवहनवचनं च निर्वा-

पोपाकरणदोहनादिरूपस्य हविर्ग्रहणस्यापि प्रदर्शनार्थम् । यद्यभागां देवतामावाहयेद्गृह्णी- याद्वेति बह्वृचश्रुतेः । तेनाभागायै निरुप्तमुपाकृतं दुग्धं चैवोत्सृज्य, एवमाज्येन यजेत । कात्यायनस्त्वाह--'अधिकं निरुप्य तच्च यजेन्न वाऽचोदितत्वात्' इति। तत्र भागिन्यभा- गयोर्मिश्रनिर्वापेऽपि विभागमन्त्रेण विभक्तस्याभागाभागस्य त्यागः ॥ ४२ ॥

**यदि भागिनीं नाऽऽवाहयेद्यदोपस्मरेत्तदुपोत्थाय मन- साऽऽवाहयेद्यद्वो देवा अतिपाद(त)यानीत्याहुतिं जुहुयात् ॥ ४३ ॥**

भागिन्यनावाहने सति प्रागिज्यायाः स्मृते तदानीमेवोपोत्थाय मनसाऽऽवाह्य— 'यद्वो देवा' इत्याहुतिं जुहुयात् । परतास्त्विज्यायाः स्मृतावाहुतिरेव नाऽऽवाहनम्॥ ४३॥

**यस्य हव्यं निरुप्तꣳ स्कन्देदाज्यं वा गृहीतं चित्रं देयम् । वरो देय इत्येकेषाम् ॥ ४४ ॥**

निर्वापप्रभृत्योत्पवनाच्छिन्दत्प्राणि दद्यात् । ततश्चित्रम् । उभयत्र भूपतये इत्यनुम- न्त्रणम् । व्याख्यातः शेषः ॥ ४४ ॥

**यस्यै देवतायै गृहीतमहुतꣳ स्कन्देद्यदस्य गृहे पुष्कलꣳ स्यात्तद्दद्यात् ॥ ४५ ॥**

देवतायै गृहीतमितीज्यार्थमवत्तमित्यर्थः । देवतान्तरायें स्वकर्मेऽनिज्या, अनिर्वापो वा । यदस्य गृह इत्यादि व्याख्यातम् । एतेषु निमित्तेषु पुष्कलदानमेव प्रायश्चित्तम् । यदाऽन्यदीयाद्धविषोऽन्या देवतेज्यते, अन्यदीयाभ्यां वा याज्यानुवाक्याभ्यां तत्र पुष्कलं दत्त्वा शिष्टादेव पुनरवदाय यजेत, सर्वस्यैव हविषो देवतार्थत्वात् । अवदानदोषे पुनरायतना- दवदानमित्याश्वलायनवचनाच्च । तथा देवतायै गृहीतस्य स्कन्दने भूपतये' इत्यभिमन्त्र्या- यमेव विधिरादानायोग्यत्वे तु तदेवाऽऽदाय यजेत । तथा देवतान्तरायेऽप्यसमाप्ते कर्मणि स्मृते तदानीमेवेज्या निर्वापो वा । समाप्ते त्वग्न्यन्वाधानादारभ्यान्तरितयागार्था पुन- रिज्या ॥ ४५ ॥

**यद्याहुती विपरिहरेयुर्मनो ज्योतिर्जुषतामित्याहुतिं जुहुयात् ॥ ( ख० १५ ) ॥ ४६ ॥ यस्य देवते अवदाने वा याज्यानुवाक्ये वा विपरिहरेयुस्त्वं नो अग्ने स त्वं नो अग्न इत्येताभ्याꣳ संततिं जुहुयात् । सर्वत्रान्तरिते विपरीते च ॥ ४७ ॥**

यस्य देवते विपरिहरेयुर्व्यत्ययेन नयेयुर्ऋत्विजः । यथा निर्वापावाहनादिप्रथममग्नी- षोमयोः कुर्युरथाग्नेरिति । प्रथमं पूर्वार्धादवदाय, अथ मध्यादित्यवदानविपर्यासः ।

तथा—अग्नीषोमीयादग्नि यजस्याग्नेयादग्नीषोमावित्यादि हविषाम् । याज्यामनुवाक्यां कुर्यादनुवाक्यां वा याज्यामचोदिता वाऽन्यतरत्र कुर्यादुभे वाऽचोदिते इति याज्यानुवाक्ययोः ।

सर्वत्रोक्तविषयेऽन्यत्र चायं विधिः । उक्तविषये तु पूर्वेण विकल्प्यते तत्र प्रधानान्तराये—कृत्वा प्रायश्चित्तं पुनः क्रिया पूर्वत्रैव दर्शिता । यदाऽङ्गमप्यन्तरितमसंस्थिते तन्त्रे स्मृतं तदुपकारक्षमं च तदपि क्रियते । द्रव्यसंस्कारस्तूपयुक्ते द्रव्ये न क्रियते तदर्थत्वात् । तथा समन्त्रके कर्मण्यमन्त्रकमपवृत्ते ( क्ते ) प्रायश्चित्तमेव न पुनर्मन्त्रप्रयोगस्तादर्थ्यादेव पुनः प्रयोगो वा यावदन्ते वा व्यापद्येतेत्यत्रोक्तान्न्यायात् । तथाच भरद्वाजः—अपवृक्तार्थस्य कर्मणो मन्त्रप्रयोगः कृताकृत इति । द्राह्यायणेन चोक्तम्—'यजुरन्तर(रा)येऽन्वाहार्यं ध्यानजप्ये उपेक्षणं शाण्डिल्यः' इति । होममन्त्रान्तर(रा)ये तु पुनर्होमोऽन्यत्र प्रतिनिगद्य होमेभ्यः । तेषु तु नाऽऽवृत्तिर्याज्याप्राधान्यात् ॥ ४६ ॥ ॥ ४७ ॥

**यदि बहिष्परिध्याहुतिः स्कन्देदाग्नीध्रं ब्रूयादेताꣳ संकृष्य जुहुधीति । ताꣳ सोऽञ्जलिना संकृष्य जुहुयान्मा यजमानो रिषन्मा पत्नी मा यज्ञो मा यज्ञपतिः स्वाहेति तस्मै पूर्णपात्रं दद्यात् ॥ सा प्रायश्चित्तिः ॥ ४८ ॥**

'यदि पुरा प्रयाजेभ्यो बहिष्परिध्याहुतिः स्कन्देदित्यापस्तम्बः । यत्र पुरा प्रयाजेभ्योऽप्याहुतिसंभवः सोऽस्य विधेर्विषयः । यथा करम्भपात्रादि पूर्णपात्रः (त्रं) पात्रपूर्णो (र्णी) व्रीह्यादि ॥ ४८ ॥

**यदि पुरोडाश उद्वा पतेत्स वा विजेत तमन्तर्वेद्यासाद्य किमुत्पतसि किमुत्प्रोष्ठाः शान्तः शान्तेरिहाऽऽगहि । अघोरो यज्ञियो भूत्वा सीद सदनꣳ स्वं मा सीद सदनꣳ स्वं मा हिꣳसीर्देव प्रेषित आज्येन तेजसाऽऽज्यस्व मा नः किंचन रीरिषो योगक्षेमस्य शान्त्या अस्मिन्नासीद बर्हिषीति तमेतेन यजुषाऽभिमन्त्रयेदभिवाऽऽघारयेत् ॥४९॥**

उत्पतेत्कपालेभ्यः पात्र्यां वा प्रमादादपगच्छेत्स विजेत भिद्येत वा ततस्तमादाय बहिर्व्यासाद्य किमुत्पतसीति द्वाभ्यामभिमन्त्र्य द्वाभ्यामभिघार्य पुनः स्थाने स्थापयेत् । अस्तीर्णे तु बर्हिष्यभिमन्त्रणाभिघारणे एव क्रियेते नोद्वासनादि ॥ ४९ ॥

भूत्वा प्रभवति यजमानो यस्यैतां यज्ञे प्रायश्चि-
त्तिं कुर्वन्ति ॥ ( ख० १६) ॥ ५० ॥

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चदशप्रश्ने चतुर्थः पटलः ।

भूत्वा भूतिं प्राप्य प्रभवति प्रभुर्भवति समानानामीश्वरो भवतीत्यर्थः । प्ररोचनाप्रदर्शनमादरार्थम् ॥ ५० ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां पञ्चदशप्रश्ने चतुर्थः पटलः ॥

अथ पञ्चदशप्रश्ने पञ्चमः पटलः ।

अथ सोमप्रायश्चित्तान्युच्यन्ते—

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् । दूरेदृशं गृहपतिमथर्व्युम् । अग्निनाऽग्निः समिध्यते सप्त ते अग्ने मनो ज्योतिर्जुषतां त्वयाच्छि-ष्छद्यन्मे मनसश्छिद्रं यद्वापो(चो)यच्च मे तदः । अयं देवो बृहस्पतिः सं तद्दिसञ्चतु राधसा ॥ विश्वकर्मा हविरिदं जुषाणः संतानैर्यज्ञं समिमं तनोतु । या व्युष्टा उषसो याश्च याज्यास्ताः संदधामि हविषा घृतेन । अयाश्चाग्ने । त्वं नो अग्ने । सत्वं नो अग्ने । भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टु-वाꣳसस्तनूभिर्व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु । पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयुः । अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसाऽगमन्निह । शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो मदन्ति मा नो

मध्या रीरिषताऽऽयुर्गन्तोः। प्रेद्धो अग्न इत्येषा। श्रुत्कर्णाय कवये मेध्याय वचोभिर्नाकमुपयामि शꣳसन्। यतो भयमभयं तत्कृधी नोऽग्ने देवाना-मव हेड युक्ष्व। अग्निं वो देवमग्निभिः सजोषा यवि(जि)ष्ठं दूतमध्वरे कृणुध्वम्। यो मर्ते-(र्त्ये)षु निध्रुविर्ऋतावातपुर्मूर्धा घृतान्नः पावको घृतप्रतीको घृतयोनिरग्निर्घृतैः समिद्धो घृतम-स्यान्नम्। घृतमुषस्त्वा सरितो वहन्ति घृतं पिब-न्त्सुयजा यक्षि देवान्॥ आयुर्दा अग्न इमो अग्ने सप्त ते अग्ने मनो ज्योतिर्जुषतां त्रयस्त्रिꣳशद्यन्मे मनसश्छिद्रं विश्वकर्मा युनाज्मि त्वाऽग्निं युनज्मी-न्धानास्त्वा॥ ( ख० १७ )॥ अग्निर्न ईडित ईडितव्यैर्देवैः पार्थिवैः पातु। वायुर्न ईडित ईडि-तव्यैर्देवैरान्तरिक्षैः पातु सूर्यो न ईडित ईडित-व्यैर्देवैर्दिव्यैः पातु। विष्णुर्न ईडित ईडितव्यैर्देवै-र्दिश्यैः पातु। अग्निर्यजुर्भिः पूषा स्वगाकारेण त इमं यज्ञमवन्तु ते मामवन्त्वनु व आरभेऽनु मा रभध्वꣳ स्वाहेत्येतैस्त्रिभिरनुवाकैरविज्ञातप्राय-श्चित्ते सोमे त्रयस्त्रिꣳशतमाहुतीर्जुहोति॥ १॥

तत्राश्रुतानि विशेषप्रायश्चित्तानि यत्र दोषाणां सोऽविज्ञातप्रायश्चित्तः सोमः। एत-दुक्तं भवति, पुरुषप्रमादालस्यादिभिस्तत्र प्रायशो भवन्त्येवान्येऽन्येदोषाः। न च ते सर्वे श्रुतप्रायश्चित्तविशेषा एव भवन्ति, विचित्रत्वात्तेषाम्। तस्माददृष्टदोषविघातार्था एता आहुतीर्जुहोतीति। तत्र—अग्निर्न ईडित इत्यादीनां त इमं यज्ञमित्यादिरनुषङ्गः। यथा पार्थिवैः पातु त इमं यज्ञमित्यादि। तथा—अग्निर्यजुर्भिस्त इमं, पूषा स्वगाका-रैस्त इममिति च॥ १॥

त्रयस्त्रिꣳशतं यज्ञतनूराग्नीध्रे॥ २॥

नात्र पूर्वपूर्वानुद्रवणम्, अवचनात्॥ २॥

पृथिवि भूवरि सिनीवाल्युरन्ध्र आचित्ते मनस्ते भुवो विवस्त इति वसतीवरीषु सवनीयासु वा विषिक्तासु सप्ताऽऽहुतीर्जुहोति॥ ३॥ सोम-

स्याऽऽज्यमसि हविषो हविर्ज्योतिषां ज्योतिर्विश्वेषां देवानां भागधेयी स्थेत्यभिमन्त्र्य सं वः सिञ्चन्तु मरुतः समिन्द्रः सं बृहस्पतिः । सं वोऽयमग्निः सिञ्चत्वायुषा च बलेन च । सर्वमायुर्दधातु मे ॥ मान्दा वाशाः । आपो भद्राः । आदित्पश्यामि । आपो हि ष्ठा मयो भुवो यो वः शिवतमो रसस्तस्मा अरं गमाम व इत्येताभिः सप्तभिः सँसिञ्चेदभि वा मन्त्रयेत ॥ ४ ॥

प्रतिपदमेकैकाऽऽहुतिः । भुवो विवस्त इति सप्तमी । सवनीयासु एकधानासु विविक्तासु स्कन्नासु । संसिञ्चेत्ता एव पुनराददीत । यदा त्वादानायोग्यास्तदाऽभिमन्त्रयेत ॥ ३ ॥ ४ ॥

यदि प्रातःसवने पुरा होमात्सोमोऽतिरिच्येत तं चमसेष्वभ्युन्नयेयुरुप जुहुयुर्वा ॥ ५ ॥

प्रातःसवनेऽन्तिमस्य चमसगणस्य प्राग्घोमाद्यदि कलशादिषु पश्येयुरतिरिक्तं(क्तानि) चमसेष्वानयेत् । उपजुहुयाद्वा परिप्लवादिनाऽर्वागनुवषट्कारात् । उपहोमास्तु परतो होमाद्दर्शनेऽपि यावदनुवषट्कारं लभ्यन्ते, उपहोमकालानत्ययात् । प्राग्घोमादिति चानुवषट्कारहोमोऽभिप्रेतः ॥ ५ ॥

हुतेऽतिरिक्तस्याऽऽशयित्वा स्तुतशस्त्रवन्तं कुर्युः सा प्रायश्चित्तिः ॥ ६ ॥

निर्वृत्ते सानुवषट्कारहोमे दृष्ट्वा ततः स्तुतशस्त्रवन्तं सोमं कुर्यात् ॥ ६ ॥

होतृचमसमुख्यांश्चमसानुन्नीय बृहतः स्तोत्रमुपाकरोति ॥ ७ ॥

अतिरिक्तादेवोपस्तरणं चमसानाम् । अत्र चमसानुन्नीयेति वचनाच्चमसगणाय पर्याप्तसोमातिरेक एवातिरिक्तविधिः । अन्यथाऽग्निं नरादिविधिरेवेति सिद्धं भवति । केचित्त्वाहुतिमात्रातिरेकेऽप्येकधनाभिर्वर्धयित्वाऽतिरिक्तविधिं कुर्वन्ति ॥ ७ ॥

गौर्धयति मरुतामिति धयद्वतीषु स्तुवीरन् ॥ ८ ॥

पञ्चमोऽत्र स्तोमभाग इति ब्रह्मत्वविधावेव दर्शितम् ॥ ८ ॥

अस्ति सोमो अयꣳ सुत इति वैतास्वैन्द्रावैष्णवीभिर्होत्रे स्तुयुः ॥ ९ ॥

---

१ क. पश्येत् इतिपाठः

एतासु वा स्तुवीरन् नेतरयोरन्यतरेण साम्ना । अथवा—ऐन्द्राविष्णवीभिर्होत्रे ॥९॥

**ऐन्द्रावैष्णवꣳ होताऽनुशꣳसति ॥ १० ॥**

गतः ॥ १० ॥

**एतदेव माध्यंदिने सवनेऽतिरिक्ते प्रायश्चित्तम् ॥ ११ ॥**

यदि माध्यंदिनेऽतिरिक्तं पश्येदेतदेव प्रायश्चित्तम् ॥ ११ ॥

**बण्महाꣳ असि सूर्येति सौर्येषु बृहता गौरवीतेन वा स्तुवीरन् । एतदेव तृतीयसवनेऽतिरिक्ते प्रायश्चित्तम् । वैष्णवीषु शिपिविष्टवतीषु बृहता गौरवीतेन वा स्तुवीरन् ॥ १२ ॥**

स्तोत्रे विकार इत्यापस्तम्बः ॥ १२ ॥

**अग्निष्टोमे सोमोऽतिरिच्येतोक्थ्यं कुर्वीत ॥ १३ ॥**

तृतीयसवनेऽपि प्राग्घोमाद्दृष्ट्वा स एवाभ्युन्नयनविधिरुपहोमो वा । हुते तु दृष्ट्वा अग्निष्टोमश्चेत्क्रतुस्तमुक्थ्यं कुर्वीत । तत्रातिरिक्तं रसमाध(ह)वनीये प्रकृतिवद्धारां कृत्वा स्थाल्योक्थ्यं गृह्णाति । तत एकधनानां यथार्थमित्येतदाद्या पञ्चहोतुः क्रियते । ग्रहावकाशशृतंकारास्तु लुप्यन्ते । प्रस्र(श्र)प्स्यन्तो ग्रहानवेक्षन्त इति वचनात् । ततः प्रातःसवनवदुक्थ्यं विगृह्णातीत्याद्युन्नेतः सर्वं राजानमित्यन्तं तन्त्रं तायते । स्तोत्रेषु चोक्थ्यवदेव स्तोमभागः । न तु द्वादशस्याऽऽवृत्तिः, उक्थ्यत्वाविधानात् ॥ १३ ॥

**यद्युक्थ्ये षोडशिनं यदि षोडशिन्यतिरात्रं यद्यतिरात्रे । ( द्विरात्रं यदि द्विरात्र एकस्तोत्रमेव )॥१४॥**

तृतीयसवनेऽतिरिच्येतेति कुर्वीतेति चानुषङ्गः । सर्वः प्रयोगश्चैषां ग्रहग्रहणादिरुक्थ्यवद्द्रष्टव्यः । एकस्तोत्रमेवेति तृतीयसवनेऽपि सवनान्तरवदेकस्तोत्रमेव, न तूत्तरः क्रतुरित्यर्थः । अत्र सूत्रकारेण शाखान्तरानुसारादतिरात्रातिरेके द्विरात्रः । ततः परमेकस्तोत्रं चोक्तम् । तैत्तिरीयकेऽतिरात्रातिरेकेऽप्येकस्तोत्रमेवोच्यते 'यस्यातिरात्रेऽतिरिच्यते तं वै दुष्प्रज्ञानम्' इत्यादिना । छन्दोगबह्वृचैरपि तदेवाऽऽम्नातमनुमतं च तत्तत्कल्पकारैः । वचनानि तु विस्तरभयान्न लिख्यन्ते । अतोऽतिरात्रातिरेकेऽप्येकस्तोत्रं युज्यते विकल्पयितुम् । कात्यायनस्तु तत्रैकस्तोत्रमुक्त्वाऽऽह—'अप्तोर्यामो वा' इति । अप्तोर्यामेऽप्येकस्तोत्रमेवाऽऽहोपग्रन्थकारः । अथो अप्तोर्यामे गौरवीतमेव शिपिविष्टवतीषु कुर्युः' इति । अथ विकृत्येकाहानां यथास्वं प्रकृत्युक्त एवातिरिक्तविधिरनुसंधातव्यः । वाजपेये त्वेकस्तोत्रमेवोक्तवानुपग्रन्थकारः । तथा तासु बृहन्निधनं वा जृम्भं कुर्युः, इति । अत्र पुनः सर्वस्यास्य सोमातिरेकविधेरनुग्रहमाचष्टे बौधायनः—'यथा यस्य प्रातःसवन

इत्यादि यथा ब्राह्मणमुक्त्वाऽऽह ' इति च्छन्दोगबह्वृचेषु कामयमानेषु ते चेन्न कामये॰रन्प्रातःसवनेऽतिरिक्ते यां स्थालीं राज्ञेऽतिशिष्टाय मन्यते तस्या उपरिष्टादाग्रयणमानीयाधस्तादुपगृह्णाति तं त्रिरभिविष्यन्दयति. सोऽभिविष्यन्दमानः सर्व एवाऽऽग्रयणः संपद्यते तं त्रिरभिहिंकृत्य परिमृज्य सादयति ' इति । तथा माध्यंदिनेऽप्येतमेव विधिमविकृतमुक्त्वाऽऽह । तृतीयसवनेऽतिरिक्ते हारियोजनमेवात्राभिविष्यन्दयति । न हि पुनर्ग्रहणं विद्यत इति । कात्यायनोऽप्याह—'पूर्वात्सवनादतिरिक्तस्योत्तरे संयावनमेके[1] तं निकामयमानोऽभ्यतिरिच्यत इति श्रुतेः । तृतीयसवनाच्चेद्धारियोजनेऽवनीय होमः । अप्सु तावृजीषमिश्रस्याप्स्ववहरणम् ' इति । अथ यदा सूत्रकारमतादतिरात्रे द्विरात्रः क्रियते तदा पूर्वमहः पत्नीसंयाजान्तं संस्थाप्य द्वितीयोऽप्स्वतिरात्रः कार्यः । उपरिष्टादतिरात्रत्वादहीनानां व्युष्टिद्विरात्रप्रकृतित्वाच्च द्विरात्राणाम् । एवमन्येऽप्यहीनधर्मा द्विरात्रधर्माश्च यथाप्रकृति द्रष्टव्याः ॥ १४ ॥

( तत्र ) वैष्णवीषु शिपिविष्टवतीषु बृहता गौरवीतेन वा स्तुवीरन् ॥ १५ ॥

तार्तीयसवनिक एकस्तोत्रे ॥ १५ ॥

यदि सोमौ सꣳसुतौ स्यातां प्रथमानि चत्वारि संभारयजूꣳषि हुत्वा महति रात्रियै प्रातरनुवाकमुपाकुर्यात् । तस्मिन्परिहित एहि यजमानेत्युक्तेऽन्वारब्धे यजमाने संवेशायोपवेशाय गायत्रिया अभिभूत्यै स्वाहेति पुरस्तात्प्रातःसवनस्य जुहुयात् ॥ १६ ॥

यदि सोमयोः समानस(सु)त्यः स्यात् । आदितः प्रातःसवनस्य बुध्यमात्रे(ने) चतुर्भिः संभारयजुर्भिर्हुत्वा प्रबोधनकाले प्रातरनुवाकस्योपाकरणमन्वारब्धे यजमानेऽध्वर्युः(यजुर्भिः) संवेशायोपवेशाय॰ अभिभूत्यै स्वाहेति एवमन्तेन जुहुयादिति भाष्यकृत् ॥ १६ ॥

उत्तराणि चत्वारि संभारयजूꣳषि हुत्वा संवेशायोपवेशाय त्रिष्टुभोऽभिभूत्यै स्वाहेति पुरस्तान्माध्यंदिनस्य सवनस्य जुहुयात् । उत्तराणि चत्वारि संभारयजूꣳषि हुत्वा संवेशायोपवेशाय जगत्या अभिभूत्यै स्वाहेति पुरस्तात्तृतीयसवनस्य जुहुयात् । उत्तराणि चत्वारि संभार-

---

१ सवनमेके ।

यजूꣳषि हुत्वा संवेशायोपवेशायानुष्टुभोऽभिभूत्यै स्वाहेति पुरस्तादनूबन्ध्याया वपाया जुहुयात् । उत्तराणि चत्वारि संभारयजूꣳषि हुत्वा संवेशायोपवेशाय पङ्क्त्या अभिभूत्यै स्वाहेति पुरस्तादुदवसानीयाया जुहुयात् । समिद्धेऽग्नौ हूयन्ते प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टमिति द्वे आहुती ॥ १७ ॥

एवं सवनस्य सवनस्य चाऽऽदावुत्तरोत्तरैश्चतुर्भिः संभारयजुर्भिश्छन्दसा सो(चो)त्तरै सह पङ्क्त्या । पञ्चसवनो यज्ञः । त्रीणि सवनान्यवभृथोऽनूबन्ध्येति ( आप० श्रौ० १४–७–३ ) इत्यापस्तम्बः । पञ्चसवनस्तु यजुः— अग्ने नयेति प्रातःसवनादि, अभिषवादि माध्यंदिनम्, आदित्यारम्भणम्, अवभृथोऽनूबन्ध्येति पञ्च । अन्त्यसंभारयजुर्नियुज्यते छन्दस्त्वेकैकम् । ज्वलत्यग्नौ हूयन्ते प्राणापानाविति । जपं कृत्वा वनस्पतेः ॥ १७ ॥

पुरस्तात्पाशुकात्स्विष्टकृतो जुहोत्येतिवतीः प्रतिपदो भवन्ति । प्रेतिवन्त्याज्यानि ॥ १८ ॥

पुरस्तात्पाशुकात्स्विष्टकृतोऽध्वर्यु(र्यु)र्जुहोति । जपतीत्यापस्तम्बः । एतिशब्दः प्रेतिशब्दो निगद्यते । तान्याज्यानि भवन्ति वैश्वदेव्यादीनि ॥ १८ ॥

मरुत्वतीः पूषण्वतीर्वा प्रतिपदो भवन्ति ॥ १९ ॥

मरुत्वतीः पूषण्वतीर्वाऽऽरम्भ आज्यानाम् । ब्राह्मणाच्छंसिनो यत्साम तदभिवर्तः । उभे बृहद्रथंतरे कर्तव्ये । सर्वेषु संसवप्रायश्चित्तेष्वेष विधिः ॥ १९ ॥

यद्यग्निष्टोमः सोमः परस्तात्स्यादुक्थ्यं कुर्वीत । यद्युक्थ्यः षोडशिनम् । यदि षोडश्यतिरात्रम् । यद्यतिरात्रोऽप्तोर्यामम् । यद्यप्तोर्यामो द्विरात्रम् । यदि द्विरात्रस्त्रिरात्रम् । यदि त्रिरात्र एकस्तोत्रमेव ॥ २० ॥

यद्यग्निष्टोमः । तेन सह संसवप्रायश्चित्तविधिरात्मयज्ञः कर्तव्यः संस्थाविधिकः । यद्युक्थ्यसंस्था स्यात्परयज्ञः । षोडशिसंस्था स्वशाखीययज्ञः, तैत्तिरीयकोक्थ्यसंसवे सोऽतिरेक उक्थ्ये अतिरात्र एव कर्तव्यः । यदि षोडशी परयज्ञः स्यादतिरात्रसंस्था कर्तव्या । यद्यतिरात्रः स्यात्त्रिरात्रः स्वयज्ञः कर्तव्यः । सर्वं गर्गत्रिरात्रवत् । यदि तु त्रिरात्रः परयज्ञः स्यात् । एकस्तोत्रमेव विवर्धते । यद्येकसोमातिरेकेण वोक्थ्यादिविवृद्धिः ॥ २० ॥

अभिजित्कार्योऽभिजित्यै । विश्वजित्कार्यो विश्वस्य जित्यै । सर्वस्तोमः सर्वपृष्ठः सर्वस्याऽऽप्त्यै सर्वस्यावरुद्ध्यै । क्रोशानुक्रोशे कार्ये वसिष्ठस्य निहवे उभे बृहद्रथंतरे कार्ये । सजनीयꣳ शस्यं विहव्यꣳ शस्यमगस्त्यस्य कया शुभीयꣳ शस्यमिन्द्रस्य निष्केवल्यं तानि शꣳसेदभिवर्तं ब्रह्मसाम कुर्यात् । अभिजितं विश्वजितं वा यज्ञक्रतुं कुर्यादिति संप्रेष्यति ॥ २१ ॥

अभिजिद्विश्वजिद्वा सर्वपृष्ठः सर्वस्तोमः सर्वस्याऽऽप्त्यै सर्वस्यावरुद्ध्या इति ब्राह्मणम् । वैराजं शाक्वरं रैवतमिति सोमे तूभयच्छन्दसः । सप्तदश एकविꣳशस्तृणवस्त्रयस्त्रिꣳश इति । एवंलक्षणोऽतिरात्रो भवति । विश्वजितं (सर्वस्तोमः क्रतूनाम्) इति यस्मिंस्तस्य शंसनम् । ममाग्न इति । अगस्त्येन दृष्टं कया शुभीयं नी(नारि)ष्ठे त्रीण्यपि जानीयम्( यात् । ) प्रातःसवनीये वैश्वदेवे क्षिपेत् । विहव्यं माध्यंदिनीये । मरुत्वतीये अगस्त्यस्य कयाशुभीयं तृतीयसवनीये वैश्वदेवेऽनुप्रोहेत् (क्षिपेत्) । पुनरेषां प्रयोगः—तौरश्रवसं कार्यमित्येवाऽऽहाऽऽपस्तम्बः । क्रोशानुक्रोशे कुरुताद्विस्वेवमन्तम् । पुरस्तात् प्रातःसवनात्संप्रेष्यति । प्रातःसवनान्ते प्रैषश्छन्दोमबह्वृचानां मतादिति । एतदाभिजिति विश्वजिति वा । यदुक्तं संप्रैषे सवनीयादीनि च ॥ २१ ॥

पूर्ववत्सꣳस्थाप्यः । अभिषुत्यं वा दक्षिणाभिर्वा वर्षीयाꣳसं यज्ञक्रतुं कुर्युः ॥ २२ ॥

अथवा पूर्ववत् संस्थापयितव्यः । य एवाऽऽरब्धो नैवाभिषव उक्तो(?) ' यद्यग्निष्टोमः सोमः पुरस्तात्स्यात् ' इति । दक्षिणाग्निर्या( आ )नीयाः सम( सं ) ( दक्षिणाभिर्वरीयासं ) बहुदक्षिणं शक्रयज्ञात् । रथो वा यावन्तमध्वानं गच्छति ॥ २२ ॥

यावद्रथान्ह्व(ध्वम)न्तरा गिरिं भित्वा ( त्वा ) नदी तावता सꣳसवः समानजनपदे सꣳसवो नानाजनपदे सꣳसवो नाविद्विषाणयोः सꣳसवो विद्यत इत्येकेषाम् ॥ (ख०१९) ॥ २३ ॥

अन्य( याव )द्रथान्ह्व( न्य )न्तरेति वचनात्तद्रथान्यं तावत्यध्वनि यजतो न संसवप्रायश्चित्तम् । यत्र वा गिरी स्यातामन्तरा यजेते न संसवप्रायश्चित्तं, सो गिरिकारीत्युच्यते, गिरिभिद्वा तत्रान्तरा न तत्र संसवदोषः (?) । गिरिर्वा यथा सर्वतः सर्वतो महच्छिखरैः स वा यत्रान्तरे वर्तते नानाभूते वाऽन्यत्र राज्येऽपि तत्रापि न संसवप्रायश्चित्तम् । अत्र शाखान्तरमुपसंहरत्यापस्तम्बः—'यावद्रथान्ह्वमन्तरा गिरिर्गिरिभिद्वा नदी

न्यवेयात्पर्वतान्तराये वा नानाराज्ययोर्वा संसवो नाविद्विषाणयोः संसवो विद्यत इति कङ्कतिब्राह्मणं भवति ' ( आप० श्रौ० १४–२०–४ ) इति । अन्यस्मिंश्चान्यं तत्र न संसवदोषः । विद्विषाणयोरेव संसवदोषो विद्यते । अविद्विषाणयोर्नास्ति संसवप्रायश्चित्तम् । अर्वागपि स्थान्याय्यजतो लोके ॥ २३ ॥

यदि दीक्षितानामुपतापः स्यान्महानाग्नीध्रीयमुपसमाधाय ब्राह्मणं दक्षिणतो निषाद्यैकविंशतियवान्दर्भपुञ्जीलांश्च पूर्णपात्रेऽवधाय ब्राह्मणाय प्रोच्यापः परिब्रूयात्—जीवा नाम स्थ ता इमममुं जीवयत जीविका नाम स्थ ता इममुं जीवयत संजीवा नाम स्थ ता इममुं संजीवयतेति प्रतिब्रूयात् ॥ २४ ॥

दीक्षितानां यत्रोपतापो ज्वरः स्यात् । स यजमान आयतने शेत एव । न करोति यजमानकर्माणि । तं परिगृह्याऽऽग्नीध्रमण्डपं नयेत् । परीमं परित इति नयनमन्त्र आपस्तम्बीये द्रष्टव्यः । नास्त्यस्माकं नयनमन्त्रः । तूष्णीमानयनमिति वा गम्यते । आग्नीध्रीय एव स उपसमाधानं बलवत्करणं परिस्तरणं च दर्भैर्ब्राह्मणस्तस्य दक्षिणत उपविशति । दर्भेष्वाग्नीध्रीयमभिमुखमुदकपूर्णपात्रमुत्तरतो निधायैकविंशतिकुशास्तस्मांश्च क्षिप्यन्ते । त्रिभिर्मन्त्रैराप उच्यन्ते जीवा नाम स्थ ता इत्यादि । तृतीये च मन्त्रे तस्य नामग्रहणं द्वितीयान्तं देवदत्तं संजीवयतेति ब्रूयात् ॥ २४ ॥

या जाता ओषधय इत्योषधिसूक्तेनैताभिरद्भिरभिषिञ्चेत् ॥ २५ ॥

ओषधिसूक्तेन च स्नापयत्युदपात्रे या अपः ॥ २५ ॥

पाययत्येतासामपां प्राणापानौ त उपांश्वन्तर्यामौ पातामसौ व्यानं त उपांशु सवनः पातु वाचं म ऐन्द्रवायवः पातु दक्षक्रतू ते मैत्रावरुणः पातु चक्षुषी ते शुक्रामन्थिनौ पातां श्रोत्रं त आश्विनः पात्वात्मानं त आग्रयणः पात्वङ्गानि म उक्थ्यः पात्वायुष्टे ध्रुवः पातु वीर्यं तेऽतिग्राह्याः पान्त्वसावित्यभिमृशति ॥ २६ ॥

अथैनमभिमृशन्तीत्यापस्तम्बः । सर्वेऽभिमृशन्ति । असाविति नामग्रहणं संबुद्ध्या ॥ २६ ॥

प्रतिजपति प्राणापानौ मे उपाꣳश्वन्तर्यामौ पातां
व्यानं मे उपाꣳशु सवनः पातु वाचं म ऐन्द्रवा-
यवः पातु दक्षक्रतू मे मैत्रावरुणः पातु चक्षुषी मे
शुक्रामन्थिनौ पाताꣳ श्रोत्रं म आश्विनः पात्वा-
त्मानं म आग्रयणः पात्वङ्गानि म उक्थ्यः पातु
वायुर्मे ध्रुवः पातु वीर्यं मेऽतिग्राह्याः पान्त्विति
प्रतिजपिते पुष्टिपतौ पुष्टिं प्राणे प्राणमपानेऽपानं
व्याने व्यानमुदान उदानꣳ समाने समानं वाचि
वाचमस्मै पुनर्धेहीत्याहुतिं जुहोति ॥ २७ ॥

यजमानं प्रतिजपत्यध्वर्युः । ब्रह्मेति वैखानसः । प्रतिजपिते पुष्टिपतौ पुष्टिमिति होममन्त्रः । हुत्वा पूर्ववदभिमर्श इत्यापस्तम्बः । भाष्ये तु स्वयं जपत्येतावेवोपांश्वन्तर्यामा इति । तत आहुतिराग्नीध्रीयेऽध्वर्युर्यथा पूर्वं कृतमामिशर्भनं तथैव न तु स्वयं जपः। आग्नीध्रीय उत्पन्न एतत्कर्म, नतु पूर्वम् ॥ २७ ॥

न पुनर्भेषजं करोति ॥ २८ ॥

ततो निवृत्तिः ॥ २८ ॥

यदि म्रियेत प्रागवभृथादग्न्यवभृथं कुर्युः ॥ २९ ॥

यदि यजमानो म्रियेताक्रियमाणे तु नैमित्तिके प्रागवभृथादग्निभिरेव दहनम् । अस्य परिसमापने कृते नैमित्तिके नतु प्रत्यक्षविधानात् । अधिकारः पितृमेधेन यजमानार्थत्वात् कर्मणः स नास्ति यदर्थं तत् क्रियते। अन्ये त्वाहुः—अग्निषु प्रक्षिप्यत इति ॥२९॥

अवभृथं वा गमयित्वोदाहृत्यावभृथादग्निभिरभिसमाहारं दहेयुः ॥ ३० ॥

अवभृथस्नानमन्त्रैरवभृथमन्त्रेणावभृथ इति । अथवा—' अवभृथं नीत्वा स्वकालेऽवभृथस्नानकाले तूष्णीं प्रोक्ष्याभ्युदाहृत्य प्राग्वꣳशमुन्नेतारं पुरस्कृत्य, अथ लुप्तं यजमानकर्म निवर्तते । संस्कार आशिषश्च आयुराशास्त इत्येवमाद्याः समाप्य साङ्गं क्रतुं स्वैरप्यग्निभिः । ये पितृमेधे व्यापारं गच्छन्ति तैर्यथालोकं दहेयुः । पत्नीप्रयाणेऽ( मरणे )प्येतदेवेति मीमांसकाः । तस्या अपि प्राधान्यात् । पत्नी अङ्गं, तस्मान्न तस्या इत्युपदेशः ॥ ३० ॥

एतावदेकाहे ॥ ३१ ॥

एतावदेकाहे विधानात् ॥ ३१ ॥

अहर्गणे त्वाहर दहेत्युक्त्वा दक्षिणाग्नेरङ्गारं
निर्वर्त्य निर्मन्थ्येन वा दहेयुः ॥ ३२ ॥

अहर्गणे तु सत्रेऽहीने वाऽऽहर दहेत्युक्त्वा यजमानमात्मानमध्वर्युराहर तं यजमानं मृतं विधिना दह तं चैनामिति प्रैषार्थः । दक्षिणाग्नेर्गृहीत्वाऽङ्गारान्निर्मन्थ्येन वा, मृतस्य यजमानस्य दहनं तूष्णीममात्यैः कर्तव्यम् । वर्तमानमहः परिसमाप्यास्य पत्नीसंयाजान्तं कर्मान्ये कुर्युः ॥ ३२ ॥

**दक्षिणस्यां वेदिश्रोण्यामस्थिकुम्भं निदधाति ॥ ३३ ॥**

यजमानस्य चेति शेषः ॥ ३३ ॥

**तिसृभिः सार्पराज्ञीभिरभिमतिहृताभिरुद्गातारः स्तुवीरन् ॥ ३४ ॥**

उद्गातारः सार्पराज्ञीभिः स्तुवीरन्निति तिसृभिरस्थीनि ॥ ३४ ॥

**इतर ऋत्विजो होतृप्रथमाः प्राचीनावीतिनो यामीरनुब्रुवन्तः सार्पराज्ञीनां कीर्तयन्तो दक्षिणान्केशपक्षानुद्ग्रथ्य सव्यान्प्रस्रस्य दक्षिणानूरूनाघ्नानाः सव्यानित्येकेषाम् ॥ ३५ ॥**

ऋत्विजो होतृप्रथमाः प्राचीनावीतिनो दक्षिणान्केशपक्षानुद्ग्रथ्य बद्ध्वा सव्यान्मुक्त्वा दक्षिणानूरूनाघ्नाना विपरीतमित्येके ॥ ३५ ॥

**त्रिः प्रसव्यं मार्जालीयमनुपरीयुः ॥ ३६ ॥**

अस्थीनि त्रिः प्रसव्यं परिगच्छन्त्यप नः शोशुचदघमिति मन्त्रेणानेन पश्चाद्यामीयं यमो दाधारेति सार्पराज्ञीश्च कीर्तयति । यत्स्तुतमननुशामि(?)स्तामिति लिङ्गात् । उच्चैस्तुष्टमानसाः सर्पराज्ञीः । सव्यान्बद्ध्वा दक्षिणान्मुक्त्वा सव्यानूरूनाघ्नानाः त्रीरेव प्रतिनिधिमप नः शोशुचदघमित्येतेनैव तत्कृत्वोदङ्मुखा गच्छन्ति । अथैभ्यो यजमानेभ्यो दक्षिणतोऽश्मानं परिधिं दधाति—इमं जीवेभ्यः० पर्वतेनेति विशेष्व(षोऽ)कृतास्वहीनसंततिषु पूर्वकाल एव रात्रौ परिस्तरणान्ते महारात्रे बुद्ध्वा यत्प्राप्तकालमहस्तन्त्रं कुर्वन्ति ॥ ३६ ॥

**ऐन्द्रवायवाग्रा ग्रहा मैत्रावरुणाग्रा वा मार्जालीयन्यन्ते भक्षानुपनिनीयुः ॥ ३७ ॥**

अग्निष्टोमनिमित्तं कुर्वन्त्युपसमूहनं, तस्य भूयस्त्वात् । तस्मादेव स्तोमान्(मा) गृह्णन्ते । तथा दर्शपूर्णमासयोः प्रायश्चित्तेषूत्पन्नेषु नान्यमाज्यं निरुप्यते । केचित्त्वस्यार्थे सोमक्रयं कुर्वन्ति । अयमग्निष्टोमो नैमित्तिक इतरेषां मृतस्य नाधिकार इति न्यायः । तदा सर्वे याजमानं कुर्वन्ति । सूत्रकारमतिस्तु तस्यायं यज्ञ इति तदा तु जपानां याजमानानां संस्काराणाम्—आयुराशास्त इत्यादीनां लोपः । अग्निष्टोमसंस्थासु सोमे चैन्द्रवायवाग्रा

ग्रहा मैत्रावरुणाग्रा वा । यामीषु सर्वस्तोत्राणि । स्तोत्रे स्तोत्रे वर्तमानेऽस्थिघटो निशीयते । मार्जालीयेऽङ्गप्रधानभक्षान्निनीयन्ते ॥ ३७ ॥

अग्न आयूꣳषि पवस इति प्रतिपदं कुर्वीरन् ॥ ३८ ॥

अग्न आयूꣳषीति सर्वस्तोत्राणामारम्भः । अत्र विशेषमाहाऽऽपस्तम्बः—'रथंतरसामैषां सोमः स्यात् । आयुरेवाऽऽत्मन्दधतेऽथो पाप्मानमेव विजहतो यन्तीति विज्ञायते' । ( आप० श्रौ० १४—७—२२ ) इत्यादि । रथंतरपृष्ठ एवायं स्तोत्रविधिः । अस्मिन्पत्नीसंयाजान्ते कृते तस्याग्नयोऽपशीयन्ते निर्मथ्य पितृमेधादिप्रकृतिवच्छेषं समापयन्ति । सत्रमहीनं वा । यस्त्वकृतो दिवसस्तस्मादारभ्य मृतस्य च यत्कर्म तत्सर्वं कुर्वन्ति । तस्मिन्निर्हारपक्ष एष विधिरनाथस्य ॥ ३८ ॥

एतावदनाथे नाथवतस्तु दग्ध्वाऽस्थीन्युपनह्य यस्तस्य स्वो नेदिष्ठी स्यात्तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् ॥ ३९ ॥

एतावदनाथे नाथवत इति हेतुवचनात् । यदि तु नाथवान्दग्ध्वाऽऽहर दह्रेत्युक्त्वा दक्षिणाग्नेरङ्गारेण कृष्णाजिनेऽस्थीनि बद्ध्वा निधाय तस्मिन्नपि न दृश्यन्ते । मृतस्य यः पुत्रः सोदर्यो भ्राता वा मृतस्य स्थाने दीक्षित आत्मसंस्कारे न वपनमिति केचिद्व्याचक्षते । यस्याऽऽवृत्तिः । प्रेताग्नयस्तु ये दीक्षितास्त एव तिष्ठन्त्या क्रतुसमाप्तेः । येनेष्टयोऽग्नयस्ते गृहे तिष्ठन्ति नित्यकर्मापि तस्य क्रियते । प्रवासागतस्य चेन्न स्वयं तु पितृशुश्रूषां कुर्वन्प्रतिनिविर्ष्ट एतेन सहेतरयाजमानस्तिष्ठति । मृतस्य यजमानस्य कर्म यः करोति ये त्वितरे यजमानास्ते ॥ ३९ ॥

संवत्सरेऽस्थीनि याजयेयुः । अग्निष्टोमः सोमो रथंतरं गौरवीतं वा साम सप्तदशः स्तोमो व्याख्याते ग्रहाग्रे स्तोत्रेऽस्थिकुम्भमुपनिदधाति ॥ ४० ॥

संवत्सरे पूर्णेऽस्थीनि याजयेयुरिति श्रुतेः । जपो यजमानसंस्कारश्च निवर्तते । अर्थलुप्ता आयुराशास्त इत्येवंविधा आशिषश्च । दीक्षणीया तु देवतापरिग्रहार्थेन न दीक्षार्थेन । अग्निष्टोम ऐन्द्रवायवाग्रा मैत्रावरुणाग्रा वेत्येवमादि पूर्वास्थियज्ञवत् । अनुत्पन्ने तु मार्जालीये ये तक्षास्तेषां तु त्याग उत्करे । द्वादशमासात्मकमस्यास्थियज्ञस्य दक्षिणा उदवसानीयान्तं पृष्ठशमनीयं मैत्रावरुण्यामिक्षां वा कृत्वा क्रियतेऽस्थियज्ञः । एष विधिः सूत्रकाराणाम् । मीमांसकानां तु पृथक्पृथक् पृष्ठशमनीयं सौत्रामण्यामिक्षां कृत्वा यथैव पूर्वयज्ञे दीक्षिताः सह(व)नेष्टिना(ष्ट्या) कुर्वन्ति । तेषां नैमित्तिको यजेत प्रमीत इति

यावज्जीवश्रुतेः । नित्यानां निवृत्तिः । अग्निहोत्रं तु मृतहोमे न क्रियते चतूरात्रमहूयमानानां लौकिकत्वश्रुतेः । अग्नेर्गुप्त्यर्थत्वादिति अनुपदकारवचनाच्च । केचित्त्वहूयमानाग्नीन्धारयन्ति । संवत्सरेऽस्थीनि याजयेयुरिति वचनान्न लौकिका भविष्यन्तीति मृतपत्न्यास्थियज्ञेऽपि दीक्षिते पत्नीकर्म च करोति नेष्टिसमीपतः ॥ ४० ॥

**यामेन साम्ना स्तुवते । द्वादशशतं दक्षिणा ॥ (ख० २०) ॥ ४१ ॥**

**इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चदशप्रश्ने पञ्चमः पटलः ॥**

गतः ॥ ४१ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां पञ्चदशप्रश्ने पञ्चमः पटलः ॥

=====

अथ पञ्चदशप्रश्ने षष्ठः पटलः ।

---

**यदि सत्राय दीक्षेताथास्य साम्युत्थानं जायेत । सोममय(वि)भज्य विश्वजिताऽतिरात्रेण सर्वस्तोमेन सर्वपृष्ठेन सर्ववेदसदक्षिणेन यजेत ॥ १ ॥**

सत्राय सत्रार्थम् । यज्ञशून्यसत्रेण यक्ष्य इत्युक्त्वा यदि न यजेत । यो यक्ष्य इत्युक्त्वा न यजत इति लिङ्गात् । याऽत्र योक्ष्य इत्युक्त्वेति विधिप्राप्तां त्रैधातवीयामेके सहस्रदक्षिणां समामनन्ति ( आप० श्रौ० १४–८–२ ) इत्यापस्तम्बः । सा सहस्रदक्षिणा कार्या । सत्रे दीक्षित्वा रोगादिना निमित्तेन मध्य एवोत्थातुमिच्छेत्स सोमस्य स्वांशं गृहीत्वा स्वाग्नींश्च समारोप्य गत्वा कृतान्तादेव प्रक्रम्य विश्वजिद्विधिना क्रतुः समापनीयः । एवमतिरात्रेण सर्वस्तोमेन सर्वपृष्ठेन सर्ववेदसदक्षिणेन यजेत इति वचनात् । न चास्य सप्तदशोऽग्निष्टुद्भवति । अत एव विधेरयज्ञविभ्रेषात् ॥ १ ॥

**कृतान्तात्कर्माणि प्रतिपद्यते ॥ २ ॥**

कृतान्तो यमः । तस्य संबन्धात्पैतृमेधिककर्माणि प्रतिपद्यत इत्यर्थः ॥ २ ॥

**अवलिख्योखायास्तैरन्यां मृद५ सध्स्कृत्य कुर्यात् ॥ ३ ॥**

यदि दीक्षासूत्तिष्ठासेदित्यापस्तम्बः । स चोखायाः पांसूनपादाय तैरन्यां मृदं संसृज्य तूष्णीमुखां कृत्वा तस्यामुख्यमुत्पादयेत् ॥ ३ ॥

**अवलिख्य पशुशिरसां तूष्णीकेष्वाश्लेषयेत् ॥ ४ ॥**

तथा पञ्चपशुशिरोभ्यो लेशानपादाय लौकिकेषु पशुशिरःस्वाश्लिष्य मृदा प्रलिप्य निदधाति ॥ ४ ॥

**प्रणीत आहवनीये तूष्णीमग्निꣳ हराति ॥ ५ ॥**

'प्रणीतेऽग्नौ तूष्णीमन्यं प्रणयेत् । मन्त्रवन्तमित्यपरम्' ( आप० श्रौ० १४–८–१० ) इत्यापस्तम्बः । प्रणीतेऽग्नावुत्तिष्ठत इत्यनुषङ्गः । स्पष्टमन्यत् ॥ ५ ॥

**संचितेऽग्नावुत्तिष्ठतो न साम्युत्थानेऽग्निचयनं विद्यते ॥ ६ ॥**

'चितेऽग्नावुत्तिष्ठतो नाग्निचित्या विद्यते । तूष्णीं वाऽग्निं चिन्वीत । मन्त्रवन्तमित्यपरम्' इति भरद्वाजः ॥ ६ ॥

**प्राचीनमुदीचीनं वोदवसाय विहारꣳ साधयित्वा सर्वपृष्ठया (ष्ठया) यजेत । सर्वक्रतुभ्य आगूर्याशक्यमाने यष्टुम् । त्रैधातवीयया सत्रे तु विश्वजिताऽतिरात्रेण ॥ ७ ॥**

आगोरणं मनसा संकल्पः । वाचा चेत्यपरम् । सूत्रार्थः पूर्वैर्व्याख्यातः ॥ ७ ॥

**यदि सुन्वतामाहवनीयोऽनुगच्छेदाग्नीध्रात्प्रणयेयुरेनं यद्याग्नीध्रो गार्हपत्याद्यदि गार्हपत्यो मन्थेयुरेनम् ॥ ८ ॥**

सुन्वतामिति जात्याख्यायामिति बहुवचनम् । नतु सत्रार्थम् । औत्तरवेदिकस्याऽऽग्नीध्रीयोऽग्निर्योनिस्तस्यापि शालामुखीयः । तस्य त्वदक्षाणमन्थनम् । प्राक्त्वाग्नीध्रप्रणयनादौत्तरवेदिकस्यान्वाहितविधिना प्रणयनं शालामुखीयात् । तस्य तु तेनैव विधिना मन्थनं प्र[स]क्त्वौत्तरवेदिकप्रणयनात्तेनैव विधिनाऽस्य प्रणयनं प्राजहितात् । प्राजहितदक्षिणाग्निसभ्यावसथ्यानां तु यथाप्रकृत्यन्वाहितविधिरेव सर्वत्र ॥ ८ ॥

**यस्माद्दारोरुद्द्रायेत्तस्यारणी कुर्यात् ॥ ९ ॥**

अत एव पुनर्मन्थेदित्युक्तम् । तत्र यद्दारुगतोऽग्निरन्ततोऽनुगच्छेत्तच्छित्त्वाऽरणी परिकल्प्य मन्थेत् ॥ ९ ॥

**क्रमुको भवति ॥ १० ॥**

धनुरादिनिर्लेखनप्रभवाः शकलाः क्रमुकः, तत्रेन्धनार्थे भवति ॥ १० ॥

**ब्रह्मण उद्गात्रे होत्रेऽध्वर्यवे च चतुरो वरान्दद्यात् ॥ ११ ॥**

मुख्याश्चत्वारो महर्त्विजः ॥ ११ ॥

**यद्यक्रीतꣳ सोममपहरेयुरन्यः क्रेयः ॥ १२ ॥**

प्राक्क्रयादपहरणे पुनराहृत्य क्रय एव कार्यो नान्यत्प्रायश्चित्तमित्यर्थः ॥ १२ ॥

**यदि क्रीतं यो नेदिष्ठी स्यात्तत आहृत्याभिषुणुयात् ॥ १३ ॥**

क्रीतस्यापहरणे यो नेदिष्ठो नेदिष्ठः सोमसंनिकृष्टदेश इति यावत्। ततो यावदर्थमाहृत्यं तमेवाभिषुणुयादित्यर्थः ॥ १३ ॥

**सोमाहाराय सोमविक्रयिणे वा किंचिद्दद्यात् ॥ १४ ॥**

य इदानीं सोमस्य हर्ता यो वा पूर्वः सोमविक्रयी तयोरन्यतरस्मै यथाश्रद्धं दद्यात् ॥ १४ ॥

**यदि तं न विन्देयुः पूतीकानभिषुणुयात्। यदि न पूतीकानथ फाल्गुनानि। यदि न फाल्गुनान्यथार्जुनान्यथाऽऽदारान्। यदि नाऽऽदारान्या एव काश्चाऽऽर्द्रा ओषधीराहृत्याभिषुणुयात् ॥ (ख०२१) ॥ १५ ॥**

पूतीकादय ओषधिविशेषाः। फाल्गुनानि तृणविशेषाः। तेष्वादाराः फाल्गुनानि च समुच्चीयन्ते। तत्राप्यापस्तम्बीये विशेषः—'पूतीकाभाव आदारान्फाल्गुनानि च यानि श्वेततूलानि स्युस्तदभावे याः काश्चौषधीः क्षीरिणीररुणदूर्वाः कुशान्वा हरितानिति। वाजसनेयकम्। अप्यन्ततो व्रीहियवान्' (आप० श्रौ० १४–८–१३) इति। तत्राऽऽदारादयोऽपि सोमस्यैव प्रति निधयो न पूतीकादेः सोमस्याङ्गत्वात्। तेन सर्वेषां तद्धर्मतच्छब्दौ भवतः। हरितानित्येव सर्वालाभेऽपि हरितान्व्रीहिस्तम्बान्यवस्तम्बान्वाऽभिषुणुयान्न त्वसमाप्य विरमेदित्यर्थः ॥ १५ ॥

**प्रतिधुक्प्रातःसवने पूतीकाश्च। दधि च माध्यंदिने सवने पूतीकाश्च। शृतं च तृतीयसवने पूतीकाश्च ॥ १६ ॥**

प्रतिधुगादयः पूतीकाश्च सहाभिषूयन्ते, न तु श्रयणं प्रतिधुगादिभिरित्यर्थः ॥ १६ ॥

**अपिवा प्रतिधुषा प्रातःसवने सर्वान्सोमाञ्छ्रीणाति। शृतेन माध्यंदिने सवने दध्ना तृतीयसवने नीतमिश्रेण ॥ १७ ॥**

सर्वेष्वप्येतेषु प्रतिनिधिकल्पेषु प्रतिधुगादिभिः सर्वसोमानां श्रयणं स्यात्। समुच्चीयते च तत्तत्प्राकृतैः श्रयणैर्मैत्रावरुणादीनाम्। प्रतिधुगशृतं दुग्धमात्रं पयः। तथा च भरद्वाजः—'प्रतिधुगिति दुग्धमात्रं स्यात्' इति। नीतमिति नवनीतम्। तन्मिश्रेण केवलेन वा दध्ना श्रयणम् ॥ १७ ॥

**अग्निष्टोमः सोमः स्याद्रथंतरसामा ॥ १८ ॥**

आरब्धः क्रतुरग्निष्टोमान्त एव कार्यो रथंतरसामा च यद्यपि संस्थान्तरं सामान्तरं वाऽभिहितमासीत् ॥ १८ ॥

**एकां गां दक्षिणां दद्यात्तेभ्य एव ॥ १९ ॥**

यद्यपि पुनरिज्यायां तेभ्यो दास्यन्ते दक्षिणास्तथाऽपि तेभ्य एवेत्यर्थः । एवं च पुनरिज्यायामपि त एवर्त्विज इति सिद्धं भवति ॥ १९ ॥

**पुरा द्वादश्याः संवत्सरे वा । तस्मा एव क्रतवे पुनर्दीक्षेत । तत्र तद्दद्यात्पूर्वस्मिन्दास्यन्स्यात् त एवैनमृत्विजो याजयेयुः ॥ २० ॥**

प्रतिनिधिना प्रवृत्तस्य क्रतोः कर्मान्तरत्वभ्रमादृत्विगन्तरपरिग्रहनिरासार्थोऽयं नियमः । ब्राह्मणवाक्यमेतत्पुनरिज्याविधानार्थं व्याख्यातुमुदाह्रियते कल्पान्तरे पुनः सोमं क्रीणीयादिति लिङ्गेन पुनरिज्याऽनुमीयते । वाक्यशेषश्च भवति यज्ञेनैव तद्यज्ञमिच्छति, इति । अत्रैवमुच्यतां तर्हि कियदन्तः पूर्वक्रतुः कियदादिश्चोत्तरः कश्च तस्य कालः का वा संस्थेति तदेतत्सर्वमाहाऽऽपस्तम्बः—'अवभृथादुदेत्य पुरस्ताद्द्वादश्यास्तस्मा एव क्रतवे पुनर्दीक्षेत' इति । अवभृथान्तस्तावत्पूर्वः क्रतुः । दीक्षणीयादिश्चोत्तरः । दीक्षायाश्च पूर्वसुत्याप्रभृत्यर्वाग्द्वादशरात्रात्कालः । तस्मा एव च क्रतवे दीक्षेत यत्संस्थः प्रागारब्ध इत्यर्थः । आश्वलायनस्तु अत्र पूर्वमपि क्रतुमुदवसानीयान्तमुक्तवान् । यथा यज्ञं संस्थाप्योदवसाय पुनर्यजेत, इति । विकल्पं त्वाह कात्यायनः—'यथा समाप्य पुनर्यज्ञोऽवभृथान्तो वा' इति । तत्र तद्दद्यात्पूर्वस्मिन्दास्यन्स्यादिति । तामेव दक्षिणां दद्यात् । यां पूर्वस्मिन्क्रतौ दास्यन्स्यात् । दक्षिणोत्कर्षवचनसामर्थ्यात् प्राग्दक्षिणाभ्योऽपहार एवायं विधिः । दत्तासु दक्षिणासु रसस्यर्जीषस्य वाऽपहारेऽपि समाप्तिरेव प्रतिनिधिना । तथा प्रवृत्तद्रव्यलाभे नायं विधिः सर्वत्र । तथा चाऽऽश्वलायनः—'सोमाधिगमे प्रकृत्येति एवं च पूतीकानेव क्रीतवतस्तदपहारे पुनस्तानेव लभमानस्य नायं विधिर्भवति । तथा सर्वापहार एवायं विधिः । असर्वापहारे त्वतिशिष्टमन्येन वर्धयित्वाऽभिषुणुयुः । सर्वः क्रीतापहारविधिः क्रीतनाशदोषयोरपि दर्शनार्थः, तुल्यन्यायत्वात् । अभिदग्धे तु तत् प्रायश्चित्तं यदपहृत इति लिङ्गाच्च । तथा क्रीते राजनि नष्टे दग्धे वा' इत्याश्वलायनः ॥ २० ॥

**अथ यदि सदोहविर्धानान्यभिदहेरन्ग्रहानध्वर्युः स्पाशयेत् । स्तोत्राण्युद्गाता । शस्त्राणि होता ॥ २१ ॥**

ग्रहान्गृहीतानगृहीतान्हुतान्होष्यमाणांश्चाध्वर्युः स्पाशयेद्बुध्येतेत्यर्थः ॥ २१ ॥

**अनभिदग्धे सोमे कृतान्तात्कर्मणि प्रतिपद्येरन् ॥ २२ ॥**

'पार्श्वतो देवयजनमध्यवसाय कृतान्तादेव प्रक्रामेयुः' इत्यापस्तम्बः । देवयजनमवसाने वेदिकरणादीनि तूष्णीं क्रियन्ते मन्त्रेण वा प्रागुक्तन्यायात् । तथाऽनावृताः

क्रियेरन्नावृता वेत्याश्वलायनः । कृतान्तादिति यावत्कर्म कृतं ततः परं तन्त्रमित्यर्थः । प्राग्वंशादिमण्डपदाहे तु न देवयजनान्तरं गम्यते ॥ २२ ॥

**दग्धे तत्प्रायश्चित्तं यदपहृते ॥ २३ ॥**

अभिदग्धे तु सोमे यदपहृतप्रायश्चित्तं यो नेदिष्ठी स्यादित्यादि तदेव भवति ॥२३॥

**पञ्चात्र गा दक्षिणा ददाति । पञ्च वरानित्येकेषाम् ॥ २४ ॥**

या तत्रोक्ता गौरेकां दक्षिणां दद्यादिति तस्याः स्थाने तत्र पञ्च दद्यात् । अनडुहोऽपि प्राप्त्यर्थं वरवचनम् । प्रवृत्तद्रव्यस्य लाभे त्वत्रापि प्रकृत्या समाप्तिर्द्रष्टव्या॥२४॥

**यदि ग्रावा दीर्येत द्युतानस्य मारुतस्य साम्ना स्तुवीरन् । ब्रह्मसाम्नेत्येकेषाम् ॥ २५ ॥**

यदि प्रातःसवने ग्रावा शीर्येत पुरस्ताद्बहिष्पवमानादित्यापस्तम्बः । दीर्येत खण्डितः स्यात् । द्युतानस्य मारुतस्य यत्साम तेनात्र स्तुवीरन् । यद्यपि न तस्य च्छन्दोगैर्ब्रह्मसामत्वमुक्तं तथाऽप्यत एवानुवादात्कचिद्विधिर्द्रष्टव्यः ॥ २५ ॥

**यदि प्रातःसवने कलशो दीर्येत वैष्णवीषु शिपिविष्टवतीषु स्तुवीरन् ॥ २६ ॥**

व्याख्यातमिदं ब्राह्मणे—' यदि प्रातःसवने कलशो दीर्येत वैष्णवीषु शिपिविष्टवतीषु स्तुवीरन् यदि मध्यंदिने दीर्येत वषट्कारनिधनꣳ साम कुर्युः । यदि तृतीयसवन एतदेव ' इति । तद्यथा ब्राह्मणमेवानुसंधातव्यमित्यर्थः । कलश इति द्रोणकलशस्यैवैकदेशग्रहणं, यथा सत्यभामा भामा भीमसेनो भीम इति । दीर्येत भिद्येत ॥ २६ ॥

**यदि माध्यंदिने दीर्येत वषट्कारनिधनꣳ साम कुर्युः । यदि तृतीयसवन एतदेव ॥ २७ ॥**

निधनमन्तिमा भक्तिः । तद्वषट्कारो यस्य तद्वषट्कारनिधनं तत्साम गायेयुः॥२७॥

**यदि कलशो दीर्येत वषट्कारनिधनं ब्रह्मसाम कुर्युरित्येकेषाम् । सर्वेषामनवयवेन श्रूयते॥(ख०२२)॥ ॥ २८ ॥ असवे स्वाहा वसवे स्वाहा विभुवे स्वाहा विवस्वते स्वाहा गणश्रियै स्वाहा मलिम्लुचाय स्वाहा शूषाय स्वाहेति सप्ताऽऽहुतीर्हुत्वेन्द्रस्य ग्रहोऽस्य गृहीतो ग्राह्यो देवानां पूरसि तं त्वा प्रपद्ये सह ग्रहैः सह पशुभिः सहर्त्विग्भिः सह सौम्यैः सह सदस्यैः सह दाक्षिणेयैः सह**

**दक्षिणाभिः सह यज्ञेन सह यज्ञपतिना भवि-**
**शानि सह यन्मे अस्ति तेनेत्यभिमन्त्र्य ॥ २९ ॥**

यद्वषट्कारनिधनं साम तद्ब्राह्मणाच्छंसि साम कुर्यात् । तथाऽसवे स्वाहा, इत्याहुतिषु हुतास्वध्वर्युणा दीर्णमनुमन्त्रयते यजमानः । नोत्तरयोः सवनयोरयं विधिः । यदि प्रात-सवने कलशो दीर्येत ( आप० श्रौ० १४–८–२९ ) इत्यापस्तम्बीये तु प्रातःसव-नग्रहणादुत्तरविधावनुसवनमितिवचनाच्च ॥ २८ ॥ २९ ॥

**सवेशाय त्वोपवेशाय त्वेत्यनुसवनं दीर्णे जुहोति ॥ ३० ॥**

एतैः प्रतिमन्त्रमनुसवनं दीर्णे पञ्चाऽऽहुतीर्जुहोतीत्येके (आप०श्रौ० १४–८–८९) इत्यापस्तम्बः । सवनत्रयार्थोऽयं कल्पः । तेन सर्वत्र विकल्प्यते । एवं कृते प्रायश्चित्ते संधानीयद्रव्यैः कलशं प्रतिलिम्पेत् । तथा च बौधायनः—'स यद्यवदीर्णो भवति प्रति-लिम्पत्येनम्' इति । धारणासमर्थत्वे त्वन्यं मन्त्रेण प्रयुज्य तस्मिन्न(न्र)समवनयेत् । स्कन्ने तु रसे विधिमाह बौधायनः—'आग्रयणादत्राऽऽशुं प्रस्कन्दयति' इति । पूत-भृदाधवनीययोस्तु दीर्णयोः सर्वप्रायश्चित्तं हुत्वाऽयमेव प्रकारो द्रष्टव्यः । तथा च तावे-वैकैकं प्रकृत्याऽऽह बौधायनः—'स यद्यवदीर्णो भवति लिम्पत्येनम्' इति । तथा- 'आग्र-यणादेवात्राऽऽशुं प्रस्कन्दयति' इति । समानोऽयं प्रकार आग्रयणस्थाल्यां विदीर्णायाम् । कलशात्तु रसोत्पत्तिः । यथोक्तम्—यदाऽऽग्रयणः कलशादिति ॥ ३० ॥

**यदि सर्वैः पर्यायैरस्तुतमभिव्युच्छेत षड्भि-**
**र्होत्रे स्तुयुः । तिसृभिस्तिसृभिरितरेभ्यः ॥ ३१ ॥**

यदि सर्वै रात्रिपर्यायैः (आप० श्रौ० १४–२३–१२) इत्यापस्तम्बः । अतिरात्रे त्रयो रात्रिपर्यायाश्चतुश्चमसगणास्तैस्त्रिभिरप्यस्तुते यदि व्युष्टा रात्रिः स्यात्तदा त्रिष्वपि पर्यायेषु होतृशस्त्रार्थानि स्तोत्राणि षड्भिः षड्भिः स्तुयुः, इतराणि मैत्रावरुणब्राह्मणा-च्छंस्यच्छावाकशस्त्रार्थानि तिसृभिस्तिसृभिः । एवं द्वादशस्वपि रात्रिस्तोत्रेषु ह्रासः कार्यः ॥ ३१ ॥

**यदि द्वाभ्यां पर्यायाभ्यामस्तुतमभिव्युच्छेद्धोत्रे**
**मैत्रावरुणाय चान्यतरस्य स्तुयुः । ब्राह्मणा-**
**च्छंसिनेऽच्छावाकाय चान्यतरस्य ॥ ३२ ॥**

यदि द्वाभ्यां पर्यायाभ्यामस्तुते प्रथममात्रेण स्तुते व्युच्छेत्तदा मध्यमपर्याये होतृ-मैत्रावरुणार्थे द्वे एव स्तोत्रे स्तुयुः । ब्राह्मणाच्छंस्यच्छावाकार्थे तु लुप्येते । एतदेव विप-रीतमुत्तरपर्याये । मध्यमोत्तमयोः पर्याययोरितरेतरापेक्षायां पूर्वोत्तरत्वं वेदितव्यम् ॥३२॥

**यद्येकेन पञ्चदशभिर्होत्रे स्तुयुः । तिसृभिस्ति-सृभिरितरेभ्यः ॥ ३३ ॥**

यद्येकेन पर्यायेणास्तुते व्युछेत्तदा होतुः स्तोत्रं यथाप्रकृत्यैव पञ्चदशभिः स्तुयुः । इतराणि पञ्चभिः । अत्रेयं मीमांसा—'किमयमभिव्युष्टिशङ्कायामेव विधिरुताभिव्युष्टौ सत्याम्' इति । शङ्कायाम्, इति ब्रूयात् । कुतः । ब्राह्मणेष्वभिव्युच्छेदित्येवाऽऽम्नानात् । नियतपरिमाणभूतासु स्तोमवचनानुपपत्तेश्च । न हि नियतकालपरिमाणा सर्वत्राभिव्युष्टिर्येन तत्परिमिताः स्तोमा नियम्येरन् । अतः सत्यामभिव्युष्टौ नैमित्तिको ह्रासः । न त्वनभिव्युष्ट्यर्थ इति सांप्रतम् । तदुक्तमुपग्रन्थकारेण—अभिव्युच्छेदित्येव शाट्यायनिब्राह्मणं भवति । तथा भाल्लविनां तथा कालविनां तथा तैत्तिरीयाणां तथा सर्वेषां विभक्त्युपनिपात एव स स्यात् । अथापि चेदनभिविवासार्थोऽभविष्यदपरिमितः स्तोमोऽभविष्यत् । यथा नाभिविवसेत् तथा स्तुवीरन्नित्येवाभविष्यत् । न ह्यनभिविवासार्थे परिमाणमुपपद्यते । तेन तु परिमाणग्रहणेन जानीमोऽभिव्युष्ट्या संयुक्त एवायं कल्पो भवतीति ॥ ३३ ॥

**अग्ने विवस्वदुषस इत्याश्विनस्य प्रतिपदं कुर्वीरन् ॥ ३४ ॥**

त्रिष्वप्युक्तेषु निमित्तेष्वेषैव प्रतिपत् ॥ ३४ ॥

**यस्याऽऽश्विने शस्यमाने सूर्यो नोदियात् । सर्वा अपि दाशतय्यः शंसेत् । सौर्यं पशुं बहुरूपमुपाकुर्यात् । यस्याऽऽश्विने शस्यमाने सूर्यो नाऽऽविर्भवतीति विज्ञायते ॥ ३५ ॥**

यदा सूर्यो न प्रकाशते मेघादिच्छन्नस्तदा संश्विचमसेषु भक्षितेषु नानावर्णश्छाग आलभ्यते प्रसज्यते च तत्र सवनीयतन्त्रम् । दश मण्डलान्यवयवा अस्या इति दशतयी ऋक्संहिता । तस्या ऋचो दाशतयीर्दाशतयीरित्याह्वानतिभेदात् । ता बह्वीरप्यनुब्रूयाद्वा यावत्सूर्यः प्रकाशते ॥ ३५ ॥

**यदि समन्वारब्धानां सर्पतामुद्गाताऽपच्छिद्येत । यज्ञेन यजमानो व्यृध्येतादक्षिणः स यज्ञक्रतुः संस्थाप्योऽथान्य आहुत्यः ॥ ३६ ॥**

स यज्ञ उदवसानीयान्तः संस्थाप्यः । अथानन्तरे पर्वणि स एव क्रतुः पुनराहर्तव्यः ॥ ३६ ॥

**तत्र तद्दद्याद्यत्पूर्वस्मिन्दास्यन्स्यात् ॥ ३७ ॥**

उक्तोऽर्थः ॥ ३७ ॥

ननु सन्त्वेते विधय एकैकस्यापच्छेदे। यदा पुनरेषां त्रयाणां द्वयोर्वा युगपदपच्छेदस्तत्र को विवेकः। किमत्र विवेचनीयं यावतामपच्छेदस्तावतां प्रायश्चित्तानि समुच्चेष्यन्ते निमित्तसंनिपातात्। सत्यं समुच्चीयतां सर्वत्र प्रस्तोतृप्रायश्चित्तमविरोधात्। उद्गातृप्रतिहर्त्रोस्तु विरुद्धे प्रायश्चित्ते कथं समुच्चेष्येते, न ह्यदक्षिणत्वसर्वस्वदक्षिणत्वयोः समुच्चयसंभवः। तत्राऽऽह—

**त एवैनमृत्विजो याजयेयुः। अथ यदि प्रस्तोताऽपच्छिद्येत यज्ञस्य शिरोऽपच्छिद्येत ब्रह्मणे वरं दत्त्वा॥ ३८॥**

उद्गातृप्रतिहर्त्रोर्निमित्तसंनिपाते मुख्यत्वादुद्गातुरेव प्रायश्चित्तं प्रवर्तते न प्रतिहर्तुस्तेन विरोधात्। तस्य तु कृते सर्वप्रायश्चित्तमात्रं भवति॥ ३८॥

अथ पवमानात्सर्पतामुद्गातृणामपच्छेदे प्रायश्चित्तमारभ्यते—

**स एव पुनर्वर्तव्यः॥ ३९॥**

स एव पुनः पूर्ववदृत्विग्वरणविधिना वर्तव्यः॥ ३९॥

**अथ यदि प्रतिहर्ताऽपच्छिद्येत पशुभिर्यजमानो व्यृध्येत। पुनर्यज्ञे सर्ववेदसं दद्यात्॥ ४०॥**

क्रतुदक्षिणार्थे सर्ववेदसं दद्यात्॥ ४०॥

**युगपदपच्छिन्नयोरुद्गातुः प्रायश्चित्तं कुर्यात्। प्रतिहर्तुः सर्वप्रायश्चित्तं जुहुयात्॥ ४१॥**

युगपदपच्छेदे तूद्गातुः प्रायश्चित्तं प्रतिहर्तुः सर्वप्रायश्चित्तं जुहोतीत्यर्थः॥ ४१॥

अस्त्वेवं यौगपद्ये। क्रमादपच्छेदेऽपि किमयमेव न्यायः, नेत्याह—

**पूर्वापरापच्छेदे यो जघन्यः सर्वप्रायश्चित्तं कुर्यात्॥ ४२॥**

पूर्वापरयोस्त्वनयोर्यतरो जघन्योऽपच्छिद्येत ततरस्य प्रायश्चित्तमेव प्रवर्तते। सर्वप्रायश्चित्तमात्रं त्वितरस्य भवति। पूर्वबाधेनैव जघन्यप्रायश्चित्तस्योत्पत्तेः। तथा च मीमांसकाः—'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' (मी० सू० ६-५-१९) इति। एतदुक्तं भवति यदा प्रतिहर्ता जघन्यस्तदा सर्ववेदसमेव दीयते, न पुनरिज्या। यदा तूद्गाता जघन्यस्तदा पुनरिज्यैव भवति न तत्रैव क्रतौ सर्ववेदसमात्रमिति। तत्र तु पुनरिज्यायां सर्ववेदसं देयमिति प्रतीयात्। कुत एतत्। पूर्वस्मिन्क्रतौ प्रागुद्गातुरपच्छेदात्प्रतिहर्त्रपच्छेदने तस्यैव प्राप्तत्वात्। तत्र तद्दद्याद्यत्पूर्वस्मिन्दास्यन्स्यादिति नियमाच्च। तथा च मीमांसकाः—'यद्युद्गाता जघन्यः स्यात्पुनर्यज्ञे सर्ववेदसं दद्याद्यथेतरस्मिन्' (जै०

सू० ६-५-२० ) इति । येषां त्वनुक्तमपच्छेदप्रायश्चित्तं ब्रह्मादीनां-तेषां सर्वप्रायश्चित्तमेव सर्वत्र ॥ ४२ ॥

**यद्युद्गाता जघन्योऽपच्छिद्येत पुनर्यज्ञे सर्ववेदसं दद्यात् ॥ ४३ ॥**

पूर्वसूत्रेण व्याख्यातम् ॥ ४३ ॥

**यद्यार्भवे पवमानेऽपच्छिद्येत सर्वप्रायश्चित्तं जुहुयात् ॥ (ख०२४) ॥ ४४ ॥**

**इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चदशप्रश्ने षष्ठः पटलः ।**

यदि माध्यंदिने पवमान एतदेव । आर्भवे सर्वप्रायश्चित्तमेव सर्वेषां कृते जुहुयात् ॥ ४४ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां पञ्चदशप्रश्ने षष्ठः पटलः ।

अथ पञ्चदशप्रश्ने सप्तमः पटलः ।

**यदि सोम उपदस्येत्सुवर्णꣳ हिरण्यं द्वैधं विभज्यार्धमृजीषेऽन्तर्धायापोऽवनयेदर्धमभ्युन्नीय ग्रहैः प्रचरेत् ॥ १ ॥**

हिरण्यस्यार्धं द्रोणकलशेऽवधाय वसतीवरीर्गृहीत्वा तासु पयः क्षिपेत् । तत्सोमस्थाने भवति । तस्मात्तु येषां ग्रहणं ग्रहाणां चमसानामर्धमभ्युन्नीय होमः पूर्ववत् ॥१॥

**ब्रह्मण उद्गात्रे होत्रेऽध्वर्यवे च चतुरो वरान्दद्यात् ॥ २ ॥**

उक्तोऽर्थः ॥ २ ॥

**यद्याग्रयणः स्कन्देदुप वा दस्येदितरग्रहेभ्यो निगृह्णीयात् । यदीतरे ग्रहाः स्कन्देयुरुप वा दस्येयुराग्रयणादभिगृह्णीयात् । अन्याञ्छुक्राद्ध्रुवाच्च ॥ ३ ॥**

गतः । शुक्रध्रुवरहितानां ग्रहाणां कलशस्य चाऽऽग्रयणो योनिरिति ॥ ३ ॥

अथान्यं विधिमाह—

**द्रोणकलशान्निगृह्णातीति सर्वग्रहाणाꣳ स्कन्नानामुपदस्तानां वेति विज्ञायते ॥ ४ ॥**

सर्वेषामेव ग्रहाणां शुक्रध्रुवसहितानामुपदस्तानां स्कन्नानां च कलश एव योनिरिति । त एते चत्वारो विधयस्तत्र तत्र विकल्प्यन्ते ।

केचित्तु—सर्वग्रहाणामित्यनेन पवमानग्रहाणामपि ग्रहणमिष्ट्वा पूतभृदाधवनीययोरप्युपदस्तयोः कलशादुत्पत्तिमाहुः । तदयुक्तम् । 'यद्ग्रहो वा कलशो वा' इति कलशस्य पृथग्ग्रहणेन पवमानग्रहाणामत्र ग्रहग्रहणेनाग्रहणावगमात् । अतः कलशवदाग्रयणादेव तयोरुत्पत्तिः । यथा तं तं प्रकृत्याऽऽह बौधायनः—'आग्रयणादेवाऽऽमुं प्रस्कन्दयति' इति । चमसानां तु सर्वत्र पूतभृत एवोत्पत्तिः, तद्योनित्वात् । सर्वेषामप्येषां विधीनां योनिविशेषपरत्वात् । क्वचिदुपदासग्रहणं क्वचित्स्कन्दनोपदासग्रहणं चैवमादेर्नाशप्रकारस्य प्रदर्शनार्थं द्रष्टव्यम् । तथा सर्वत्र सशेषस्कन्दने सोमे सोममभिगृह्य जुहुयादित्ययमपि विधिरनुसंधातव्यः । यदा तु निःशेषः स्कन्दति तदा स्वेन स्वेन मन्त्रेण यथायोनि गृहीत्वा सादयेत् ॥ ४ ॥

यदि ध्रुवः स्कन्देदायुर्दा असि ध्रुव आयुर्मे देहीति वर्चोदा असि ध्रुव वर्चो मे देहीति तनूपा असि ध्रुव तन्वं मे पाहीत्यभिमन्त्र्य वरं ददाति॥५॥

गतः ॥ ५ ॥

यद्युपदस्येत्सुवर्ण९ हिरण्यं त्रैधं विभज्य स्वाहा दिव आप्यायस्वेति प्रथममवधायाऽऽप्याययति॥६॥

स्थालीमादाय द्रोणकलशादाप्याययति । यदा तु दीर्णा स्यादसमर्था च तदाऽन्यां प्रयुज्य स्कन्नशेषस्यावनीयाऽऽप्याययति । निःशेषस्कन्नस्तु ग्रहणमन्त्रेणैव ग्राह्यः ॥ ६ ॥

स्वाहाऽन्तरिक्षादाप्यायस्वेति द्वितीयम् । स्वाहा पृथिव्या आप्यायस्वेति तृतीयम् ॥ ७ ॥

अवधायाऽऽप्याययतीत्यनुकर्षः ॥ ७ ॥

अध्वरो यज्ञोऽयमस्तु देवा ओषधीभ्यः पशुभ्यो नो धनाय विश्वस्मै भूतायाध्वरोऽसि स पिन्वस्व घृतवद्देव यज्ञस्य ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत्। ध्रुवा ह पर्वता इमे ध्रुवो राजा विशामयम् ॥ इहैवैधि मा व्यथिष्ठाः पर्वत इवाविचाचलिः । इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय । अभितिष्ठ पृतन्यतोऽधरे सन्तु शत्रवः । इन्द्र इव वृत्रहा तिष्ठापः क्षेत्राणि संजयन् ॥ इन्द्र एन-

मदीधरद्ध्रुवं ध्रुवेण हविषा । तस्मै देवा अधि-
ब्रुवन्नयं च ब्रह्मणस्पतिरिति चतसृभिरभिमन्त्र्य
वरं ददाति ॥ (ख०२५) ॥ ८ ॥

सन्नेऽभिमन्त्रिते चाध्वर्युणा, वरं ददाति यजमानः ॥ ८ ॥

यदि नाराशꣳसꣳ स्कन्देद्यमध्वर्युरुत्तरं ग्रहं गृह्णी-
यात् । तं वषट्कारानुवषट्कृते हुत्वाऽऽप्यायस्व
मदिन्तमेति तस्मादेनमाप्याययति तेनैनं भक्षवन्तं
करोति ॥ ९ ॥

भक्षिताप्यायितश्चमसो नाराशंस इत्युक्तम् । स यदि शोषणादिना नश्येत्तदा यश्च-
मसाप्यायनादनन्तरो ग्रह ऐन्द्राग्नादिस्तं स्वकाले हुत्वा चमसाध्वर्यवे दद्यात् । स च
भक्षं शेषयित्वा तेन चमसानाप्याययति अनुप्रकम्पयति च द्विः । तदर्थत्वादाप्यायनस्य
॥ ९ ॥

देवाञ्जनमगन्यज्ञ इति प्रातःसवने सोमꣳ स्कन्न-
मभिमन्त्रयेत । गन्धर्वाञ्जनमगन्यज्ञ इति माध्यं-
दिने । पितॄञ्जनमगन्यज्ञ इति तृतीयसवने । आप
ओषधीर्वनस्पतीञ्जनमगन्यज्ञ इति नक्तम् । द्यावा-
पृथिवी जनमगन्यज्ञ इति । तिरोअह्नियान्सोमे
सोममभिगृह्य निदधाति ॥ १० ॥

हविर्वा स्कन्देदित्यापस्तम्बः । हविः सवनीयादि । नक्तं रात्रिपर्यायेषु । तिरोअह्नेषु
संधिचमसेषु । एवमनुक्रमणात्तिरोअह्नेभ्यः परेष्वप्तोर्यामचमसगणेषु नायं विधि-
र्भवति ॥ १० ॥

पृषदाज्यꣳ स्कन्देद्यद्यथान्यद्दधि पृषदाज्यं गृहीत्वा
द्रप्सश्चस्कन्द मनो ज्योतिर्जुषतामिति सꣳहिता-
भ्यामेकाहुतिं जुहोति ॥ ११ ॥

यदि पृषदाज्यꣳ स्कन्देदिति भरद्वाजः ॥ ११ ॥

यद्यृतुग्रहैः प्रचरन्तौ मुह्येयातां विसृष्टधेनाः सरितो
घृतश्चुतो वसन्तो ग्रीष्मो मधुमति वर्षाः शरद्धे-
मन्त उत नो मयोभुव उदप्रुषो नभसी संवसाथाम् ।
आ नः प्रजां जनयतु प्रजापतिर्धाता ददातु परि-
वत्सरो नः । संवत्सर ऋतुभिश्चाक्लृपाणो मयि
पुष्टिं पुष्टिपतिर्दधातु ॥ आ देवानां त्वमग्ने व्रतपा

असि यद्वो वयं प्रमिनाम व्रतानि । मधुश्च माधवश्च वासन्तिकावृतू । इमं यज्ञमवन्तु ते मामवन्तु अनु व आरभेऽनु माऽऽरभध्व९ स्वाहेत्येतैः सह दशभिर्ऋग्यजुर्भिर्दशाऽऽहुतीर्जुहोति । प्रत्याहुति वरं ददाति ॥ (ख० २६) ॥ १२ ॥

मन्त्रतो मुखतः प्रैषतो मार्गतो वा विपर्यासो मोहः । तत्र विसृष्टधेना इति पञ्चभिः, मधुश्चेति त्रयोदशमासनामभिश्च जुहोति ॥ १२ ॥

यदि सोमः स्कन्देद्ब्रह्मन्सोमोऽस्कानिति ब्रह्मण आवेद्य यत्र स्कन्देत्तदपो निनीयाभूद्देवः सविता वन्द्योऽनु न इदानीमह्न उपवाच्यो नृभिः । वि यो रत्ना भजाति मानवेभ्यः श्रेष्ठं नो अत्र द्रविणं यथा दधदित्यभिमन्त्र्य हिरण्यगर्भः समवर्तताग्र इति जुहुयात् ॥ १३ ॥

ब्रह्मणः स्कन्दनादिवदनं प्रायश्चित्तानुसंधानार्थम् । तत्राभूद्देव इत्यृचा स्कन्नमभिमन्त्र्य तस्योपरि पूर्ववत्प्रादेशान्मिमीत इत्यापस्तम्बः ॥ १३ ॥

यदि चमसमभक्षित९ स्तोत्रेणाभ्युपाकुर्यात् ॥ १४ ॥

यद्यभक्षिते चमसगण उत्तरस्मै चमसगणाय स्तोत्रमुपाकुर्यात् ॥ १४ ॥

इन्दुर्हिन्वानमवागादि(धेगि)न्दोरुभयोः सोमाः साम[म]सृक्षत दिव्याश्च पार्थिवाश्च तस्य त इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीत्यभिवृष्टस्य सोमस्य भक्षयति ॥ १५ ॥

यत्र वर्षबिन्दुः पतितः सोऽभिवृष्टः । तस्य त्वेतावेक्षणं तूष्णीमिति गम्यते । प्रत्यस्मै पिपीषत इत्यवेक्षणमन्त्रः । इन्दुरिन्दुरिति भक्षणमन्त्र इति सूत्रान्तरे द्रष्टव्यः । भक्षणमन्त्रस्तु नित्यमन्त्रप्रत्याम्नायः ॥ १६ ॥

यदि दीक्षितोऽवकिरेदप्स्वग्न इत्येषा । तपोष्वग्ने अन्तरा९ अमित्राँस्तपाश९समररुषः परस्य । तपा वसो चिकितानो अचितान्वि ते तिष्ठन्तावजरा अयासः ॥ यो नः सनुत्यो

१ भवन्तु मे ता

अभिदासदग्ने यो अन्तरो मित्रमहोऽवनुष्यात् । तमजरेभिर्वृषभिस्तव स्वैस्तपा तपस्व तपसा तपिष्ठ ॥ स स्मा कृणोतु केतुमा नक्तं चिद्दूर आसते । पावको यद्वनस्पतीन्प्रास्मा मिनोत्यजरः । न हि ते अग्ने तनुवै क्रूरं चकारमर्त्यः । कपिर्बभस्ति तेजनं स्वं जरायुगौरिव । मेष इव यदुप च वि च शर्वरी यदप्सुरग्रोरुपरस्य खादति । शीर्ष्णा गिरो वक्षसा वक्षणां जयञ्श्मश्रून्बभस्ति हरितेभिरासभिरित्येतैः सह दशभिर्ऋग्यजुर्भिर्दशाऽऽहुतीर्जुहोति । प्रत्याहुति वरान्ददाति ॥ (ख० २७) ॥ १६ ॥

ब्रह्मचर्यावस्थस्य योनौ रेतःस्कन्दनमवकिरणम् । अयोनावपि बुद्धिपूर्वमित्यपरे । षट्पूर्णाहुतिर्हुत्वा, इत्यापस्तम्बः । पूर्णया स्रुचाऽऽहुतिः पूर्णाहुतिः । प्रत्याहुतीत्यनेनैकैकस्या आहुतेरेकैको वरो दक्षिणेति दर्शितं, न त्वाहुतावाहुतौ हुतायां देय इति । अन्यथा षट्पूर्णाहुतीर्हुत्वेत्यनेन विरोधात् । अन्विष्टकं दक्षिणा ददातीत्यादौ तथा दर्शनाच्च ॥ १६ ॥

॥ अप्येवा देवहेडनमिति वा ( दशाऽऽहुतीर्हुत्वा प्रत्रमानः सुवर्जन इत्येतेनानुवाकेनाभिषिञ्चेत् ) ॥ १७ ॥

अभिषेकवचनोऽवकीर्णाहेतुः । पत्न्या सहावकिरणे तन्त्रेणाऽऽहुतीर्हुत्वा पृथगुभयोरभिषेकः । यदि पुनर्दृष्ट्यामयोनौ वा रेतःस्कन्दनं स्यात्तदा सामयाचारिकोऽपि विधिरनुसंधातव्यः । शूद्रायां च रेतः सिक्त्वाऽयोनौ वाऽब्लिङ्गाभिरप उपस्पृशेत् । वारुणीभिर्वाऽन्यैः पवित्रैरिति । अबुद्धिपूर्वकस्कन्दने तूक्त एव विधिः । यन्मेऽत्र पयस इत्यादिना ॥ १८ ॥

यदि हुताहुतौ सोमौ सꣳसृजेयातामन्तःपरिध्याहवनीयादङ्गारं निर्वर्त्य यज्ञस्य हि स्थ ऋत्वियाविन्द्राग्नी चेतनस्य च हुताहुतस्य तृप्यतमहुतस्य हुतस्य च हुतस्य चाहुतस्य चाहुतस्य हुतस्य चेन्द्राग्नी अस्य सोमस्य वीतं पिबतं जुषेथाꣳ स्वाहेति हुताहुतौ सोमौ जुहुयात् ॥ १८ ॥

यदा ग्रहस्य चमसस्य वा हुतस्य भक्षायाऽऽनीयमानः शेषः प्रमा(मा)दात्किंचिद-

हुतग्रहादावापतेत् । अहुतो वा ग्रहादिर्हुतशेषे तदा 'तमस्मै भक्षं प्रयच्छेत्' इत्यापस्तम्बः । तं संसृष्टमेवं हुत्वा तस्मै भक्षं प्रयच्छेद्यः पूर्वहुतशेषभक्षणः प्राप्तः ॥ १८ ॥

मा नोऽध्वरिषुः पितरो मोत वीरान्मा नः स बन्धुरुत वाऽन्यबन्धुः । मा नो दुश्चक्षा अघशꣳस ईशताहुतोऽयं यज्ञमप्येतु देवा इति हुताहुतो सोमो भक्षयाति ॥ १९ ॥

प्रत्याम्नायोऽयं नित्यस्य भक्षमन्त्रस्य ॥ १९ ॥

मा यजमानं तमोऽविदन्मार्त्विजो मा इमाः प्रजाः । मा यः सोममिमं पिबात्सꣳसृष्टमुभयं कृतमिति भक्षयन्तमभिमन्त्रयते ॥ २० ॥

अध्वर्युरिति शेषः । यदा त्वध्वर्युर्भक्षयति तदैनं प्रतिप्रस्थाताऽभिमन्त्रयते । एवं संसृष्टं सोममिन्द्राग्निभ्यां प्रतिपाद्य पुनर्योनित उत्पन्नेन स्वकाले तां देवतां यजेद्यस्यै गृहीतोऽयमहुतोऽन्यत्र प्रतिपन्नः । यदा हुतस्यैकदेश एव हुतशेषे पतितो न कृत्स्नस्तदा शेषेणैव वर्धितेन यजेत ॥ २० ॥

सप्तर्त्विजः सप्त सदाꣳस्येषां दश क्षिपो अश्विना पञ्च वाजाः । प्राणो व्यानोऽपानो मन आकूतमग्निः स्वाहा कृतꣳहविरदन्तु देवाः ॥ प्रजापते न त्वदेतानिति भक्षं व्यापन्नमुत्तरार्धपूर्वार्धे उपरवेऽवनयेत् ॥ २१ ॥ दक्षिणार्धपूर्वार्धे वा ॥ २२ ॥

केशकीटादिभिरुपघातो व्यापत्तिः । तत्र पात्रमपि निर्णिज्यते निर्लिख्यते वा यथादोषम् । न चान्यो भक्ष उत्पाद्यः । अप्रयोजकत्वात् । प्रतिपत्त्यन्तरेण शेषकार्याच्च । नाराशंसार्थस्तूत्पाद्य एवानुप्रकम्पनार्थम् ॥ २१ ॥ २२ ॥

एकधा द्यौः एकधा पृथिवी एकधा विश्वमिदं जगत् । एकधाऽदो विश्वा भूतानि प्रस्कन्नाऽऽजयिताꣳ हविः ॥ इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः ॥ इहो सहस्रदक्षिणो रायस्पोषो निषीदतु ॥ अयं यज्ञो वर्धतां गोभिरश्वैरियं वेदिः स्वपत्या सुवीराः । इदं बर्हिरति बर्हीꣳष्यन्येमं यज्ञं विश्वे अवन्तु देवाः ॥ पयस्वतीरोषधय

---

१ ख. ग. °हुतो यज्ञो अयमस्तु दे° ।

इत्येताभिः पृषदाज्यᳲ स्कन्नमभिमन्त्र्यापोऽभ्य-
वहृत्य पात्रं निर्णिज्य पुनर्निष्टप्य निदधाति ।
तस्मिन् हिरण्यᳲ शतमानमवधायैकामिषे विष्णु-
स्त्वाऽन्वेत्विति वैष्णव्यर्चाऽथान्यद्दधि पृषदाज्यं
गृहीत्वा द्रप्सश्चस्कन्देत्यभिमृश्याश्वेनावघ्राप्य सा-
दयति ॥ २३ ॥

स्रुचमित्यापस्तम्बः । स्रुक्संयोगात्स्रुग्गतस्यैवायं विधिः । स्थालीगतस्य त्वाज्यवदेव विधिर्भवति । तत्र स्कन्नं चतसृभिरभिमन्त्र्य स्कन्नशिष्टमप्सु क्षिप्त्वा पुनः स्थाल्याः पञ्चकृत्वो वैष्णव्या गृहीत्वा मन्त्रेण सादयेत् ॥ २३ ॥

यदपामृक्षच्छकुनिर्मुखेन निर्ऋते तव । अग्निष्टत्स-
र्वᳲ शुन्धतु हव्यवाड्घृतसूदन इति शकुन्य-
वमृष्टं तस्यैतदेव प्रायश्चित्तं निर्लिख्यतेऽत्र पा-
त्रम् ॥ २४ ॥

अभिमन्त्रणमन्त्रस्त्वत्र यदपामृक्षदिति भवति पात्रनिर्लेखनं चाधिकम् । समानमन्यत्पूर्वेणेत्यर्थः । केचित्तु मुखेनेति मन्त्रवर्णात् । काकमुखेनापमृष्टस्यैवैनं विधिमिच्छन्त्यङ्गान्तरस्पृष्टं तदन्यापन्नविधिनाऽप्सु क्षिप्त्वा निर्लिखितायां स्रुचि स्वमन्त्रेण गृह्णन्ति॥२४॥

यद्वालिक्षच्छ्वपान्मुखेन निर्ऋते तव । अग्निष्ट-
त्सर्वं शुन्धतु हव्यवाड्घृतसूदन इति श्वापदाव-
लीढमभिमन्त्रयते । तस्यैतदेव प्रायश्चित्तम् । (अ-
भ्यवहरणादि पूर्ववत् । ) नात्र पात्रं प्रयु-
ज्यते ॥ (ख० २८) ॥ २५ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चदशप्रश्ने सप्तमः पटलः ॥

शुन इव पादा यस्य स श्वापदः श्वशृगालमार्जारादिः पञ्चनखः। तदवमृष्टं त्वेतयाऽभिमन्त्र्य स्रुचं च तां त्यक्त्वा पात्रान्तरं संस्कृत्य तस्मिन्गृह्णाति । समानमन्यत्पूर्वेण । एतेनैव निदर्शनेन पतितोदक्याद्यप्रयतस्पृष्टानां द्वादशमलोपहतानां च त्यागो वेदितव्यः ॥ २५ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां पञ्चदशप्रश्ने सप्तमः पटलः ॥ ७ ॥

---

१ पादम् ।

अथ पञ्चदशप्रश्नेऽष्टमः पटलः ।

यदस्य पारे रजस इति जुहुयात् । यदि पशु-
रुपाकृतो वेपेत निषीदेद्वाश्येतोच्छ्रयेत्पलायेता-
कामसंज्ञपने च । यस्माद्भीषाऽवेपिष्ठास्ततो नो
अभयं कृधि । प्रजाभ्यः सर्वाभ्यो मृड नमो
रुद्राय मीढुष इति द्वितीयां वेपमाने ॥ १ ॥

उपाकरणप्रभृत्या संज्ञपनाद्यदि पशुः क्रन्देत्तदा यदस्य० इति हुत्वा यस्माद्भीषे-त्यनया जुहुयात् । अभिमन्त्रयेत वा पशुमित्यापस्तम्बवैखानसौ । संज्ञपनदशायां त्विन्द्रस्य भाग इत्यवेक्षणस्यापि समुच्चय इति द्रष्टव्यम् ॥ १ ॥

यस्माद्भीषा न्यषद इति द्वितीयां निषण्णे ॥ २ ॥

जुहुयादित्यनुवर्तते । उपाकृतस्योपवेशने त्वेतयैव यस्माद्भीषा न्यषद इति विकृतया द्वितीयामाहुतिं जुहुयात् । समानमन्यत्पूर्वेणेत्यर्थः । केचित्तु तिष्ठति पशाविति प्रयाजेषु नियमात्तत्रैवैमं विधिमिच्छन्ति ॥ २ ॥

उदुस्र तिष्ठ प्रतितिष्ठ मा रिषो मेमं यज्ञं यजमानं
च रीरिषः । सुवर्गे लोके यजमानꣳ हि धेहि शं
न एधि द्विपदे शं चतुष्पद इत्युस्रमुत्थापयेत्॥३॥

निषण्णे तं मैत्रावरुणो दण्डेनोत्थापयेदित्यापस्तम्बः । निषण्णे त्वयमप्यपरो विशेष इति भावः । उस्रशब्दस्य गोजातिवचनत्वाद्गव्युस्रेत्यविकृतो मन्त्रः ॥ ३ ॥

उच्छागेति च्छागम् । उन्मेषेति मेषम् । ऊर्ध्व
ऊषुण ऊतय इति द्वितीयाम् । ऊर्ध्वो नः
पाह्यꣳहसो निकेतुना विश्वꣳ समत्रिणं दह ।
कृधीत ऊर्ध्वा च रथाय जीवसे विदा देवेषु
नो दुव इति तृतीयाम् ॥ ४ ॥

च्छागमेषयोस्तूच्छाग तिष्ठ उन्मेष तिष्ठेति विक्रियते । दशायां तु जात्यनादरेणोद्रश इत्येव भवति । तत्रोच्छागेत्यस्य प्रकृत्यर्थत्वाद्विकृतिषु पश्वनेकत्वे स्त्रीपशौ च यथार्थ-मूहः । नोस्रादीनामूहो विकृत्यर्थमेवोपदेशात् ॥ ४ ॥

यस्माद्भीषाऽवाशिष्ठा इति द्वितीयां वाश्यमाने
यस्माद्भीषा समुत्क्रꣳस्था इति द्वितीयामुच्छ्र्-
याति ॥ ५ ॥

स्पष्टम् ॥ ५ ॥

यस्माद्भीषाऽपलायिष्ठा इति द्वितीयां पलायितेऽनागच्छत्यन्यं तद्रूपं तद्वर्णं तद्वयसं तज्जातीयं तद्दैवतमुपाकृत्य तेन सꣳस्थापयेत् ॥ ६ ॥ तज्जातीयेऽविद्यमाने अजा अवयो गाव इत्यन्योन्यस्य प्रतिनिधयो भवन्ति ॥ ७ ॥

अपक्रमणं पलायनम् । 'अनागच्छत्यन्यं तद्रूपवर्णवयसं तद्दैवतमुपाकृत्य यजेत' इत्यापस्तम्बः । तस्मिन्नागमयितुमशक्ये सति संस्थानवर्णवयोभिस्तत्सदृशं तज्जातीयमन्यमुपाकुर्यात् . तज्जातीयालाभे प्रतिनिधिरुक्तः सूत्रकारेण—'अजा अवयो गाव इत्यन्योन्यप्रतिनिधयो भवन्तीति ॥ ६ ॥ ७ ॥

तेष्वविद्यमानेष्वाज्येन शेषꣳ सꣳस्थापयेत् ॥ ८ ॥

स्पष्टोऽर्थः ॥ ८ ॥

यस्माद्भीषा समज्ञास्था इति द्वितीयामकामसंज्ञपने ॥ ९ ॥

स्वयं व्याध्यादिना मरणमकामसंज्ञपनम् ॥ ९ ॥

य इदमकस्तस्मै स्वाहेति सर्वोत्तमां जुहोति ॥ १० ॥

उत्तमां तृतीयामित्यर्थः । सर्वत्र तृतीयामित्यापस्तम्बवैखानसौ ॥ १० ॥

न वा उ वेतन्म्रियसे । आशानां त्वा विश्वा आशाः । आपो हि ष्ठा मयोभुव इति चतसृभिः पशुं व्यापन्नमभिमन्त्र्यापोऽभ्यवहृत्यान्यं तद्रूपं तद्वर्णं तद्वयसं तज्जातीयं तद्दैवतमुपाकृत्य तेन सꣳस्थापयेत् । तज्जातीयेऽविद्यमाने ॥(ख०२९)॥ पलायितं व्याख्यातम् ॥ ११ ॥

मृतं पशुमपोऽभ्यवहृत्य पूर्ववदन्येन यजेत ॥ ११ ॥

उखाꣳ स्रवन्तीमगदामकर्माग्निर्होता पृथिव्यन्तरिक्षं द्यौर्यदतश्च्युतदगन्नावैत्र तन्न तत्प्राप्नोति निर्ऋतिं पराचैरिति पशूखाꣳ स्रवन्तीमभिमन्त्रयेत ॥१२॥

भिन्नां स्रवन्तीमभिमन्त्र्यान्यामुखां संस्कृत्य निवेशयेत् ॥ १२ ॥

यावन्ति पशोरवदानानि न विन्देयुस्तावत्कृत्व आज्यस्यावद्येत ॥ १३ ॥

यर्हि पशुमित्यारभ्य ये पशुं विमथ्नीरन्नित्यन्तं प्राग्यदुक्तं ब्राह्मणे तत्तत्रैवानुसंधातव्यमित्यर्थः । तत्र हि दैक्षं पशुं प्रकृत्योक्तम्—'यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपण९ हरेत् ' इति । यर्हि यस्मिन्काले पशुमाप्रीतमिष्टप्रयाजं संज्ञपनार्थमुदञ्चं नयन्ति तर्हि तस्मिन्काले तस्य तस्मात्प्राजहितात्पशुश्रपणं शामित्राग्निं हरेदित्यर्थः । पुनश्च यजमानं वा एतद्विकर्षन्ते यदाहवनीयात्पशुश्रपणं हरन्तीत्याहवनीयादुद्धरणं निन्दित्वोक्तम् । स वैव स्यान्निर्मन्थ्यं वा कुर्यादिति । स एव प्राजहित एव योनिः स्यान्निर्मन्थ्यं वेत्यर्थः । पूर्वत्र चात्र च तद्वृत्ताभ्यां प्राजहितपरामर्श इत्येतदपि प्राञ्चमग्निं प्रहरन्तीत्यादिब्राह्मणपर्यालोचनयैव प्रत्येतव्यम् ।

बौधायनश्चाऽऽह—'स वैव स्यादिति पुराणगार्हपत्यमभ्युपदिशति ' इति । समानोऽयं विधिः सवनीयेऽपि तत्प्रकृतित्वात् । निरूढपशौ त्वाहृत्यवचनादाहवनीयादेवाऽऽहर्तव्यः ।

पुनश्चोक्तं ब्राह्मणे—'यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमवद्येत्सैव ततः प्रायश्चित्तिः' इति । पशुसंबन्ध्येकमनेकं वाऽवदानं नाशदोषादिनाऽवदानायोग्यं स्यात्तस्य स्थाने ध्रौवादाज्यादवद्येदित्यर्थः । तदुक्तं भरद्वाजेन—'यद्यद्धविस्तस्याऽऽज्यं प्रतिनिधिः' इति । कृत्स्ननाशे तु पुनरालम्भः ।

केचित्तु वपाहृदययोर्नाशेऽपि पुनरालम्भमिच्छन्ति तयोः पश्वात्मत्वसंभवात् । यथा आत्मा वपेति पशोर्वा आलब्धस्य हृदयम त्माऽभिसमेति, इति च । तदयुक्तम् । विशेषानुपदेशात् । अर्थवादमात्रत्वाच्चाऽऽत्मप्रवादस्य । तदुक्तं कात्यायनेन—अवदानहानौ नाऽऽद्रियेत, हृदयनाशे त्वन्यमालभेतेत्येके हृदयं पशुभिरिति श्रुतेः । सर्वेषां वाऽऽज्यस्य यजेत, अर्थवादमात्रं पशुवचनमिति । यदि मतमनवदानत्वाद्वपाया न तत्रायं विधिरिति तदुपोत्तरसूत्रे निरसिष्यते वपादीनां मात्राहीनत्वेऽप्येकदेशे विद्यमाने तेनैव यजेत प्रतिनिधिना द्रव्यप्राधान्यात् । यथोक्तं मात्रापचारे तच्छेषेण समाप्नुयादिति ॥ १३ ॥

ये पशुं विमथ्नीरन्यस्तान्कामयेताऽऽर्तिमार्छेयु-
रिति कुविदङ्गेति नमोवृक्तिवत्यर्चाग्नीध्रे जुहुयात्
आहवनीये( शामित्रे वा )निरूढपशुबन्धे ॥१४॥

यदि दस्यवः पशुं विमथ्नीरन् जीवन्तं मांसावस्थं वा बलात्कारेण हरेयुस्तांश्च यदि यजमानः कामयेताऽऽर्तिं प्राप्नुयुरिति तदाऽनया जुहुयात् । तदलाभे तु पलायितविधिरेव भवति ॥ १४ ॥

यद्यष्टापदीत्यनुबुध्येरन्धाता रातिः सूर्यो देव
इति द्वाभ्यां गार्हपत्ये जुहोति ॥ १५ ॥

विकृतिषु स्त्रीपशुरालब्धव्या । यद्यष्टापदीत्यनुबुध्येत । गर्भिणीत्यर्थः । गर्भपादैः सहास्या अष्टौ पादा भवन्तीति कृत्वा गर्भप्रदर्शनार्थत्वाच्च । गर्भद्वित्वादिना द्वादशष-ट्पदावपि समानोऽयं विधिः । ततः प्राक्संज्ञपनादनुबोधे तामुत्सृज्यान्यामुपाकुर्यात् । परतस्त्वनुबोधे—धाता रातिः सूर्यो देव इत्याहुती जुहुयात् ॥ १५ ॥

**यस्यास्ते हरितो गर्भ इत्यभिमन्त्र्याऽऽवर्तनवर्तयेति प्रदक्षिणं गर्भमावर्तयति ॥ १६ ॥**

अथैनामध्वर्युरभिमन्त्रयत इत्यापस्तम्बः । गर्भिणीमभिमन्त्रयते यस्यास्त इति । विशसनकाले पशोरुपस्थं निर्गमानुगुणमावर्तयतीत्यर्थः ॥ १६ ॥

**वि ते भिनद्मि तकरीमित्यन्तरा श्रोणी गर्भं निष्खिदति ॥ १७ ॥**

तदावरकमुल्बं नाम मेदं निष्खिदिति च्छिनत्ति ॥ १७ ॥

**बहिस्ते अस्तु बालित्याशयाद्गर्भं निरस्योरुद्रप्सो विश्वरूप इन्दुरिति रसाय पात्रमुपयच्छति । शूलेन पशुश्रपणे निहत्य गर्भं श्रपयति ॥१८॥**

तत ऊर्वोर्मध्येन गर्भं निःसार्य शूले प्रणीक्ष्य( य ) शूलाग्रपोतं( प्रोतं ) कृत्वा निहत्य श्रपयति । गर्भश्रपणानुगुणमग्निसमीपे शूलं निखाय शामित्रे श्रपयतीत्यर्थः॥१८॥

**पशुपुरोडाशं निरुप्य न( भ )क्ती द्यावापृथिवीयं गर्भपुरोडाशं निर्वपति ॥ १९ ॥**

पशुपुरोडाशनिर्वपणकाल एव चेज्ज्ञाता गर्भिणीति तदा तन्निरुप्यानन्तरं गर्भपुरोडाश-मनुनिर्वपति । पुरस्तात्तु ज्ञाने यदैव जानीयात्तदैव निर्वपेत् । स च भक्ती द्यावापृथि-वीभ्यां निरुप्यते, न गर्भदेवतायै । न चास्यैककपालधर्माः, शेषस्योत्तरत्र प्रतिपत्ति-विधानात् । इतरथा सर्वहुतत्वेन शेषासंभवात् ॥ १९ ॥

**पशोरवदानान्यवदाय गर्भस्य पुरस्तान्नाभ्या अन्यदवद्येदुपरिष्टादन्यदवदाय दैवतेष्ववदधाति ॥ २० ॥**

पशोर्दैवतेष्ववत्तेषु गर्भस्य नाभ्या ऊर्ध्वमेकमवदाय दैवतेषु क्षिपति । तदा अधस्ता-न्नाभ्या अवदाय सौविष्टकृतेष्वित्यर्थः । पुरस्ताद्धि नाभ्यै प्राण उपरिष्टादपान इति लिङ्गात् ॥ २० ॥

**रसं त्रेधं करोति । दैवतेषु सौविष्टकृतेष्वैडेषु च ॥ २१ ॥**

यूष्णः समुच्चयार्थश्चकारो भिन्नक्रमो योजनीयः, समासेपास्वाद्दैवतादीनां समुच्चेयान्तराभावाच्च । यूष्णोपसिच्य त्रिषु गर्भरसं व्यानयतीत्यर्थः ॥ २१ ॥

**एकपदी द्विपदीति वषट्कृते जुहोति ॥ २२ ॥**

पुरस्तात्स्विष्टकृत इत्यापस्तम्बः । पुरस्ताद्वनस्पतेरिति वचनात्तस्य पुरस्तादेवेयमाहुतिः ॥ २२ ॥

**व५ट्कृते विष्णो प्रतत्ते अद्य शिपिविष्टनामेत्यन्यतरया गर्भस्य दक्षिणपूर्व५सक्थि जुहोति ॥ २३ ॥**

विष्णवे शिपिविष्टाय जुहोतीति लिङ्गात् । तथा किमित्ते विष्णाविति जुहोतीत्येव कल्पान्तरकाराः । अतो दर्विहोमधर्मेण जुहोति ॥ २३ ॥

**दक्षिणाकालेऽष्टाप्रूड्ढिरण्यं दक्षिणा । तृतीयेऽन्तरकोश उष्णीषेणाऽऽविष्टितं भवति । तद्दाति । विबलान्कोशान्करोति ॥ २४ ॥**

अत्राध्वर्यवेऽष्टाप्रूड्ढिरण्यं सकोशं ददाति । अष्टाप्रूड्ढिरण्यमुष्णीषेणाऽऽवेष्ट्य कोशेऽवधाय तृतीयेऽवधाय तृतीयेऽवदधाति, इत्यापस्तम्बः । अष्टाप्रूडष्टबिन्दुकं हिरण्यमुष्णीषेण दीर्घवाससाऽऽवेष्ट्य तत्कस्मिंश्चित्सापिधाने कोशेऽवधाय तमपि कोशमन्यस्मिन्कोशे तथा कृत्वा तमपि तृतीये कोशेऽवदधाति । अष्टाप्रूड्ढिरण्यं दक्षिणेत्यापस्तम्बः ॥ २४ ॥

**मरुतो यस्य हि क्षये यज्ञैर्वा यज्ञवाहस इत्यन्यतरया पशुश्रपणे गर्भं जुहोति ॥ २५ ॥**

गर्भं गर्भपुरोडाशं चाऽऽहवनीये जुहोति ॥ २५ ॥

**गर्भपुरोडाशं च न स्वाहाकरोति ॥ २६ ॥**

प्रतिषिद्धत्वात् ॥ २६ ॥

**अपि वा मही द्यौः पृथिवी च न इति पशुश्रपणस्य शीते भस्मनि गर्भमुपोहति ॥ २७ ॥**

अपिवेति पक्षान्तरद्योतनार्थम् । उपोहनं प्रच्छादनम् ॥ २७ ॥

**गर्भपुरोडाशं ॥ २८ ॥**

उपोहतीत्यनुकर्षः ॥ २८ ॥

**एतं युवानं परि वो ददामीति ॥ (ख० ३० )॥ पञ्चभिरभिमन्त्र्य ॥ २९ ॥**

एतं युवानमित्यमित्यभिमन्त्र्य ततः स्विष्टकृदादि कर्म प्रतिपद्यते ॥ २९ ॥

यस्यानमवृक्तो( क्तो ) यूपो विरोहेत्तस्मिꣳस्त्वाष्ट्रꣳ साण्डं लोमशं पिङ्गलं बहुरूपं ( सवनीयस्योपलम्भं ) कुर्यात्त्रयस्त्रिꣳशत्तन्तवो ये वितत्निर इति जुहुयात् ॥ ३० ॥

अहर्गणेषु यद्यसमाप्तकार्यो यूपो विरोहेत् तदा तस्मिन्नेव यूपे तत्कालपर्यागतस्य पशोः प्रसङ्गन्यायेन त्वाष्ट्रं पशुमुपालम्भ्य कुर्यात् ॥ ३० ॥

यदि कृष्णशकुनिर्ध्वꣳसयन्नुपर्युपरिसदो हविर्धानान्यातिपतेद्भय उत्पन्ने शक्ये यष्टुꣳ सर्वेभ्यो हविर्भ्यः सोमेभ्यश्च द्रोणकलशे समवदाय ये देवा येषामिदं भागधेयं बभूव येषां प्रयाजा उतानूयाजाः । इन्द्रज्येष्ठेभ्यो वरुणराजभ्योऽग्निहोतृभ्यो देवेभ्यः स्वाहेत्याहुतिं जुहोति ॥ ३१ ॥ अभये पुनर्यजेत ॥ ३२ ॥

कृष्णशकुनिः काकः । स हविषामासन्नानामुपरि पक्षवायुना वीजमान उप समीपतो गच्छेत्तेषामुपरि निषीदेद्वा तत्र देवा इति जुहुयात् । तत्संसृष्टं हविरप्सु प्रक्षिप्यान्यमुत्पादयेच्च ॥ ३१ ॥ ३२ ॥

यद्यृक्तो यज्ञभ्रेष ऋच्छेद्भूरिति गार्हपत्ये जुहुयात् । यदि यजुष्टो भुव इति दाक्षिणाग्नौ । यदि सामतः सुवरित्याहवनीये । यदि सर्वतः सर्वाभिरेकामाहवनीये ब्रह्मा वा जुहुयात् ॥ ३३ ॥

ऋक्त ऋग्द्वारतः । ऋग्वेदविहितस्य कस्यचित्कर्मणो मन्त्रस्य वा भ्रेष इत्यर्थः । एवं यजुष्ट इत्यादि ॥ ३३ ॥

मनसा वा ध्यायेत् ॥ ३४ ॥

ब्रह्मेति शेषः ॥ ३४ ॥

औदुम्बरी नश्येद्दह्येत वाऽन्यां प्रच्छिद्योर्गस्यूर्जं मयि धेहि श्रियो तिष्ठ प्रतिष्ठिता दिवꣳ स्तब्धान्तरिक्षं च पृथिव्यां च दृढा भव धमित्री धरित्री जनित्रीत्युच्छ्रयति ॥ ३५ ॥

अध्वर्युरुद्गाता यजमानश्चोच्छ्रयन्ति, इत्यापस्तम्बः । नाशः क्रिमिभक्षणमपहारादिर्वा ॥ ३५ ॥

अध्वर्युर्यजमानो ब्रह्मा वोच्छ्रयति ॥ ३६ ॥

एकमन्त्राणि कर्माणीति न्यायात् ॥ ३६ ॥

संमितां नित्येन यजुषाऽभिमन्त्रयते ॥ ३७ ॥

तूष्णीं निखाय द्युतानस्त्वेति यजुषाऽभिमन्त्रयतेऽध्वर्युः ॥ ३७ ॥

यदि हविर्धाने पद्येयातां दक्षिणामध्वर्युरुद्गृह्णीयात्प्रतिप्रस्थातोपस्तभ्नुयात् । उत्तरं प्रतिप्रस्थातोद्गृह्णीयादध्वर्युरुपस्तभ्नुयात् ॥ ३८ ॥

हविर्धानशकटयोरुभयोरन्यतरस्य वा पतने दक्षिणमध्वर्युरुद्गृह्णीयादुत्कर्षयेत् । प्रतिप्रस्थातोपस्तभ्नुयान्मेध्यामवदध्यात् । एतदेव विपरीतमुत्तरस्य ॥ ३८ ॥

वैष्णव्योपस्तभ्नुतः । वैष्णव्योपमिनुते । आश्विन्या संमृशतः ॥ ३९ ॥

तत्रोद्ग्रहणं तावदुभयोस्तूष्णीकम् । उपस्तम्भनं तु वैष्णव्यर्चा कुरुतः । ततस्तयैवोपमायाऽऽश्विन्या संमृशतः कल्पयतश्च । तत्र यथास्थानमवस्थापनमुपमानमवस्थापनस्य दृढीकरणं संमर्शनम् । इदं विष्णुः, इति वैष्णवी । यद्वा—दिवो वा विष्णो, विष्णोर्नुकमिति पृथगृचावुभयोः । नित्यस्थापने तयोर्दर्शनात् । तदा तु वैष्णवीभ्यामिति भवितव्यम् । या वां कशेत्याश्विनी ॥ ३९ ॥

अग्ने वाजस्य गोमत इति तिसृभिरुष्णिग्भिरध्वर्युराग्नीध्रे जुहोति । ककुब्भिः प्रतिप्रस्थाता ॥ (३९) ॥ भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः । भद्रा उत प्रशस्तयः । भद्रा उत प्रशस्तयो भद्रं मनः कृणुष्व वृत्रतूर्ये । येना समत्सु सासहः । येनासमत्सु सासहोऽवस्थिरा तनु हि भूरि शर्धताम् । वने मा ते अभिष्टिभिरित्येता आम्नाता भवन्ति ॥ ४० ॥

पूर्वाभिस्तिसृभिरुष्णिग्भिरध्वर्युर्जुहोति । इतराभिस्तिसृभिः ककुब्भिरितरः । षडुष्णिक्ककुब्भिरिति श्रुतिरुदाहृता । तामापस्तम्बो व्याचष्टे—'पूर्वाभिरुष्णिग्भिरध्वर्युः । उत्तराभिः ककुब्भिः प्रतिप्रस्थाता' ( १४–२०–७ ) इति ॥ ४० ॥

शिरो यज्ञस्य प्रतिधीयताममृतं देवतामयं वैष्णव्या क्रियताꣳ शिर आश्विन्या प्रतिधीयतामिति चतुर्गृहीतं पञ्चगृहीतं वा गृहीत्वा समानौ होमौ जुहुतः ॥ ४१ ॥

इयमप्याहुतिराग्नीध्रीयेऽधिकारात् । समानौ होमाविति समानता मन्त्रैक्ये ॥ ४१ ॥

यद्यामिक्युखाऽऽमा भिद्येत संकृष्य पुनः कुर्यात् ॥ ४२ ॥

यद्यामा भिद्येत तदा तान्येव कपालानि संकृष्याद्भिरुपस्कृत्य पुनः कुर्यात् । तूष्णीं मन्त्रैर्वा साम्युत्थानोक्तान्न्यायात् ॥ ४२ ॥

यदि पक्वा भिद्येत तैरेव कपालैः सुपिष्टैरन्यां मृदꣳ सꣳसृज्य कुर्यात् ॥ ४३ ॥

यदि पक्वा भिद्येत तदा कपालानि पिष्ट्वा मृदं तेन सह मेलयित्वा कुर्यात् ॥ ४३ ॥

यस्याग्निरुख्य उद्वायेदाहवनीयं प्रणीय स एव पुनः परीध्यः ॥ ४४ ॥

उखायां भव उख्यः । स यदि प्राक्संनिवापादुद्वायेद्गार्हपत्यादन्यमाहवनीयमायतने प्रणयेत् । ततश्च स एवाऽऽहवनीयः पुनः परीध्यः परित उखामिध्यः । शणकुलायेनेत्यारभ्य जातोपस्थानान्तेन प्रवृञ्जनविधिना पुनरुखायामुत्पादयितव्य इत्यर्थः । यस्य तु कामतो निमित्ततो वा प्रदाव्यादियोनिर्निर्मन्थ्यो वा भवत्युख्यस्तस्यापि स्यात्स्वायोनेराहृत्याऽऽधेयो नतु परीध्यः । पुनः परीध्य इति लिङ्गात् । स्वादेवैनं योनेर्जनयतीति लिङ्गाच्च ॥ ४४ ॥

कृष्णं वासो देयम् । कृष्णा धेनुः कृष्णो वा गौः शतमानं च हिरण्यम् ॥ ४५ ॥

गौर्बलीवर्दः । चशब्दः समुच्चयार्थः ॥ ४५ ॥

यत्पूर्वस्मिन्नहन्युत्तरस्मा अह्ने यज्ञायज्ञियं प्राति वसतीवरीर्गृह्णाति । तेनाहरभ्यासजति । तेन यज्ञꣳ संतनोति ॥ ४६ ॥

यत्पूर्वेद्युरुत्तराहार्थं कर्म क्रियते । यथा—सवनीयस्येध्माबर्हिराहरणादि तेनोत्तरमहः पूर्वस्मिन्नहन्योसजति, पूर्वोत्तरयोरह्नोः कर्माणि(णी) संबध्नातीति यावत् । तेन च यज्ञमेव संतनोति । अन्यथा स एव विच्छिन्नः स्यात् । अतोऽयमावश्यकोऽभ्यासङ्ग इत्यर्थः ॥ ४६ ॥

**यत्पूर्वस्मिन्नहन्युत्तरस्मा अह्ने स्तोत्रयमनुरूपं कृत्वा शꣳसति । तेनाहरभ्यासजति । तेन यज्ञꣳ संतनोति । यदतिप्रेष्यति तेनाहरभ्यासजति तेन यज्ञꣳ संतनोतीति ॥ ४७ ॥**

यज्ञायज्ञियं प्रति यज्ञायज्ञियकाले । पयांसि आशीरादर्थानि विशास्ति । विविधं प्रेष्यति । सूक्तवाककाले श्वः सुत्यामिन्द्राग्निभ्यामित्यादिनाऽपि । शेषं पूर्ववत् ॥ ४७ ॥

**एतेषामेकस्मिन्नक्रियमाणे नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि स्वाहेत्येतत्प्रायश्चित्तं जुहुयादेतत्प्रायश्चित्तं जुहुयात् ॥ (ख० ३२) ॥ ४८ ॥**

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चदशप्रश्नेऽष्टमः पटलः ।

---

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चदशः प्रश्नः ॥

---

एतेषामेकस्मिन्नपि कर्मणि पूर्वेद्युरेवाक्रियमाणे जुहुयादेते आहुती । किं पुनर्द्वयोर्बहुषु वेत्यर्थः । द्विरुक्तिः प्रश्नसमाप्त्यर्था ॥ ४८ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां पञ्चदशप्रश्नेऽष्टमः पटलः ।

---

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां पञ्चदशः प्रश्नः ॥

---

अथ षोडशप्रश्ने प्रथमः पटलः ।

---

विनेययुक्ताखिलसिद्धवर्य-
लसच्चिदानन्दसुखं मुनीन्द्रम् ।
नमामि सूत्रार्थविदे मुदाऽहं
हिरण्यकेश्याख्यगुरुं कृपाब्धिम् ॥

प्रायश्चित्तं पञ्चदशे प्रश्ने च समुदीरितम् ।
व्याचष्टे षोडशप्रश्ने द्वादशाहविधिं ततः ॥

अथ द्वादशाहस्य कर्मोच्यते—

**द्वादशाहेन प्रैव जायते ॥ १ ॥**

अनेन सूत्रेण द्वादशाहयागविधिरुन्नेयः। तथा चास्मच्छाखायां विधिः श्रूयते—'यः कामयेत प्रजायेयेति स द्वादशरात्रेण यजेत प्रैव जायते' ( तै० सं० ७–२–९। ७–२–९ ) इति। स च द्वादशाहो द्विविधः—समूढो व्यूढश्च। तत्र समूढप्रकारः सूत्रकारेण दर्शितः—'त्र्यनीकां व्याख्यास्यामः। ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः। अथेतरेषां नवानामैन्द्रवायवाग्रं प्रथममहः। अथ शुक्राग्रमथाऽऽग्रयणाग्रमेवं विहिता त्रिरूयनीका परिवर्तते यद्यव्यूढः' इति। एवं समूढप्रकारमुक्त्वा व्यूढप्रकारोऽपि तेनैव दर्शितः—'व्यूढे त्वैन्द्रवायवाग्रौ प्रायणीयोदयनीयावथेतरेषां द्वादशानामैन्द्रवायवाग्रं प्रथममहः। अथ शुक्राग्रमथ द्वे आग्रयणाग्रे अथैन्द्रवायवाग्रमथ द्वे शुक्राग्रे अथाऽऽग्रयणाग्रमथ द्वे ऐन्द्रवायवाग्रे' इति॥ १॥

अथ द्वादशाहं प्रकारान्तरेण प्रशंसति—

**ज्यैष्ठ्यमश्नुते स ह्येनमनुभवति ॥ २॥**

यो द्वादशाहोऽस्त्यसौ ज्येष्ठस्य यज्ञः। तथा च शाखान्तरे श्रूयते—'ज्येष्ठयज्ञो वा एष यद्द्वादशाहः स वै देवानां श्रेष्ठो य एतेनाग्रे यजते' ( ऐ० ब्रा० १९–३ ) इति॥ २॥

**अहीनः सत्रं च ॥ ३॥**

सोऽयं द्वादशरात्रो द्विविधः। सत्ररूपोऽहीनरूपश्च। नन्वस्ति द्वादशाहस्याहीनत्वं सत्रत्वं च। तत्रैव चिन्त्यते—किमहीनसत्रयोर्लक्षणभेदो नास्त्युतास्तीति। तत्र नास्तीति तावत् प्राप्तम्। कुतः। ज्योतिष्टोमावृत्तिरूपस्य समानत्वात्। यथा द्विरात्रादीनामेकादशरात्रान्तानामहीनानामावृत्तौ ज्योतिष्टोमस्वरूपं तथा त्रयोदशरात्रादीनां सत्राणामिति प्राप्ते ब्रूमः—आसीरन्नुपेयुरिति चोदनाद्वयं यजमानबहुत्वं च सत्रलक्षणम्। यजतिचोदना यजमानबहुत्वचोदनाभावश्चाहीनलक्षणम्। वैदिकप्रयोगेषु तयोरव्यभिचारादिति सिद्धान्तः॥ ३॥

**तस्याग्निकल्पो व्याख्यातः॥ ४॥**

तस्य द्वादशाहस्य चित्योऽग्निर्नियतः काठको वा॥ ४॥

**गतश्रियश्छन्दसा यजेरन् ॥ ५॥**

गता प्राप्ता श्रीर्येन स गतश्रीः शुश्रुवान् ग्रामणी राजन्यः। गतश्रिय इति बहुवचनं सत्रे च बहुयजमानकत्वनियमात्तदर्थमिति भावः॥ ५॥

**यं कामयेत च्छन्दसा यजते सोऽस्मै कामः समृध्यते। यजते यजन्त इति चोदनं योऽत-**

**पस्वी स्यादसꣳश्लिष्टोऽस्य यज्ञः स्यात्तपस्वी स्याद्यज्ञमेव तत्सꣳश्लेषयतीति विज्ञायते ॥ ६ ॥**

यजत इति यजमानमधिकृत्योच्यते, एकवचनात् । यजमानबहुत्वाद्बहुवचनं वक्ष्यमाणनियमात् । योऽतपस्वी स्यात्स एवाधिकारी, इति ॥ ६ ॥

**पीवा दीक्षते । कृशो यजते ॥ ७ ॥**

पीवाशब्दः शारीरबलदार्ढ्यार्थे प्रसिद्धः । कृशो यजत इति शरीरगतमांसादिधातुशोषणेन पापक्षयो भवति । तथा चाऽऽश्वलायनेनोपसंहृतम् 'यदा वै दीक्षितः कृशो भवति । अथ मेध्यो भवति ' इति ॥ ७ ॥

तत्र चोदकेन दीक्षादिसंख्याविकल्पः प्राप्त एका दीक्षा तिस्रो दीक्षा वा इत्यादिविकल्पस्य प्रकृतौ श्रुतत्वात्तं विकल्पमपवदितुं दीक्षासंख्यानियमं सूत्रयति—

**काम्या विद्यादष्टाचत्वारिꣳशतं क्रामयति ॥ ८ ॥**

काम्या जानात्यष्टाचत्वारिंशाद्दिनपर्यन्तमत्यन्तसंयोग इह द्वितीया स्यात् । द्वादशाह एकैकमहः सदीक्षोपसत्कमपवृत्त्ये(ज्ये)त कर्मणां पृथक्त्वेन तेषां प्रत्येकं ज्योतिष्टोमप्रकृतिकत्वा ( ११-४-५ ) दिति ॥ ८ ॥

**पञ्चदश दीक्षिरन्नर्धमासायतनाः ॥ ९ ॥**

क्रामयतीत्यन्वयः । आयतनाः परिमाणाः ॥

**सप्तदश प्रजाकामाः ॥ १० ॥**

पजाकामा इति बहुवचनं यजमानबहुत्वाभिप्रायमिति गम्यते ॥ १० ॥

**एकविꣳशतिꣳ रुक्कामाः । त्रयोविꣳशतिं प्रतिष्ठाकामाः । चतुर्विꣳशतिं ब्रह्मवर्चसकामाः । त्रिꣳशतं मासायतनाः । त्रयस्त्रिꣳशतमोजस्कामाः । चत्वारिꣳशतमिन्द्रियकामाः । चतुश्चत्वारिꣳशतं वीर्यकामाः । अष्टाचत्वारिꣳशतं पशुकामाः ॥ ११ ॥**

गतार्थः ॥ ११ ॥

**अपरिमितं दीक्षेरन्नित्यन्ततो वदन्ति ॥ १२ ॥**

ब्रह्मवादिनो वदन्ति । अपरिमितं यावत्कृशो भवति तावदित्यर्थः ॥ १२ ॥

**तेऽप्यहीनस्य याजमाने स्थानिनः ॥ १३ ॥**

येऽन्ये सप्तदशभ्यो वादा अहीन एव ते स्थानिन इत्यापस्तम्बः ॥ १३ ॥

**ब्राह्मणा ऋत्विजो दीक्षितानामदीक्षितानामहीनस्य तेन ( ते ) याजयन्ति ॥ १४ ॥**

' सप्तदशानामेव याथाकामी । सर्वे याजमाने स्थानिनः । सर्वे याजमानं कुर्युर्यत्किंचाऽऽर्त्विज्येनाविबाधकम् । विबाधमान आर्त्विज्यं बलीयः' ( आप० २१-१-२० ) इत्यापस्तम्बोऽप्याह । याजमानं यस्य यस्य यो यो दीक्षयिता स स इति भाष्यकृत् ।

ननु—सत्राणि किं कामिन एवैकैकशः कुर्युरुत बहवः संहत्येति । चोदकानुग्रहाद्बहुवचनस्य चैकैकशोऽपि लोके बहवः कामिनः सत्रं कुर्वन्तीत्यनेनाभिप्रायेणानुवादत्वोपपत्तेरेकैकशः कुर्युः । नैवम् । आख्यातगता हि कर्तृसंख्या प्रकृतिवदिहापि प्रयोगाङ्गतया विवक्षिता । न हि तस्याः किंचिदविवक्षाकारणमस्ति । सा च चोदकप्राप्तमेकत्वं बाधते । तस्माद्बहवः प्रयुञ्जीरन् ( जै० सू० १०-६-१४ ) ॥ १४ ॥

पुनरपि सत्रे दक्षिणाप्रतिग्रहलोभातिशयेन प्रसक्तिं निन्दति—

**तस्माद्द्वादशाहेन न याज्यं पाप्मनो व्यावृत्त्या इति ॥ १५ ॥**

यस्मादहीनद्वादशाहे दक्षिणाप्रतिग्रहो निषिद्धस्तस्मात्कारणादृत्विग्भूत्वा द्वादशाहेन यजमानं न याजयेत् । तदेतदयाजनं पाप्मनो व्यावृत्त्यै संपद्यते । याजने तु शास्त्रोक्तं प्रायश्चित्तं कर्तव्यम् । सत्राहीनयोरेतावान् विशेषः—सत्रे तु स्वयमस्यापि यजमानस्य प्रतिग्रह एव नास्ति । अहीने तु विद्यमानस्य प्रतिग्रहस्य दुष्टत्वात्प्रतिगृह्य प्रायश्चित्तं कर्तव्यमिति ।

ननु—सत्रेष्वपि किमन्यैरार्त्विज्यमुत यजमानैरेवेति संदेहे चोदकानुग्रहादन्यैः । ये यजमानास्त ऋत्विजः, इति वचनं यच्छब्दोपबद्धयजमानोद्देशेन तत्संस्कारार्थतयाऽऽर्त्विज्यविधिर्न त्वार्त्विज्ये यजमानविधिः । तेनाऽऽर्त्विज्यमन्यैः कार्यम् । यद्वाऽध्वर्युर्गृहपतिं दीक्षयित्वेत्यनेन ऋत्विजां संस्कारार्थेन दीक्षा विधीयत इति तद्योगादृत्विगेव यजमानशब्दगोचर इत्यनुवादः । नैवम् । अप्राकृतकार्यत्वप्रसङ्गाद्वचनानर्थक्याच्च । न चाऽऽर्त्विज्यस्य यजमानसंस्कारत्वम् । अप्राकृतकार्यत्वप्रसङ्गादेव । तस्मात्प्राकृतकार्यस्यैवाऽऽर्त्विज्यस्य यजमानाः कर्तारो विधीयन्ते । अतोऽन्येषां चोदकप्राप्तानां बाधः( जै० सू० १०-६-१५ ) ॥ १५ ॥

अथैतस्य द्वादशाहस्याहीनरूपतां विधत्ते—

**य एवं विद्वान्द्वादशाहेन यजते ॥ १६ ॥**

अत्र वेदनं प्रशंसति ॥ १६ ॥

**यजमान ऋध्नोति ॥ १७ ॥**

अन्योऽप्यृत्विक्षु मध्ये द्वादशाहयागेन समृद्धिं प्राप्नोति । पूर्वत्र यजमानबहुत्वादासि

चोदनया विधानाच्च द्वादशाहस्य सत्रत्वम् । इह तु यजमानैकत्वाद्यजतिचोदनया विधानाच्चाहीनत्वमिति विशेषः ॥ १७ ॥

इदानीं सत्ररूपद्वादशाहप्रयोगे दक्षिणानिषेधमाह—

**य एवं विद्वान्द्वादशाहेन प्रतिगृह्णाति ॥ १८ ॥**

एष ह वै कुणपमत्ति यः सत्रे प्रतिगृह्णाति ( तै० सं० ७–२–१० ) इति निषेधात् । सत्रे हि ये यजमानास्त ऋत्विज इत्येवं यजमानत्वव्यवहारवदृत्विक्त्वव्यवहारोऽप्यस्ति । अत एव शाखान्तरे—'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इत्यादावध्वर्युब्रह्मादिशब्दैर्व्यवह्रियन्ते । एवं सति ऋत्विक्त्वबुद्ध्या यागान्तरवदत्र यो दक्षिणां प्रतिगृह्णाति स प्रतिग्रहीता शवभक्षणेन यः प्रत्यवायस्तं प्राप्नोति । नात्र पञ्चनखशवो विवक्षितः, किंतु प(पु)रुषाश्वादिशवः । किंचानेन यदन्नं भक्ष्यते तद्द्वारेव भवति गोमांसभक्षणसमः प्रत्यवायो भवतीत्यर्थः । किंचैनं प्रतिग्रहीतारमुद्दिश्य यस्मिन्कांस्यपात्रे भाण्डे चान्नं धारयन्ति तत्पात्रं यदि शास्त्रोक्तमार्गेण शोधितं न भवेत्ततः शोधनाभावात्तद्युक्तगृहेऽधिकं मलं जायते तेन पात्रेण व्यवहर्तॄणामधिकः प्रत्यवायो भवतीत्यर्थः ॥ १८ ॥

एवं दक्षिणानिषेधेन सत्रप्रयोगं दृढीकृत्य यजमानैक्येनाहीनप्रयोगमपि दृढी करोति—

**ऋत्विजो यजमानं चाधिकृत्य वदति ॥ १९ ॥**

एक एव यजेत ( तै० सं० ७–२–१० ) इति श्रुतेरेकस्य कर्तृत्वात्फलभाक्त्वाच्चाहीनत्वं सिद्धम् ॥ १९ ॥

**ब्राह्मणानां तु सत्रमतो दीक्षितानाᳪ सप्तदशानामासत उपयन्ति ॥ २० ॥**

प्रकृतितो ब्राह्मणकर्तृकत्वमार्त्विज्ये प्राप्तम् । ( जै० सू० ६–६–२ ) इति तथाविधस्यैव यजमानसंस्कारत्वाद्यजमानसंस्कारत्वेन राजन्यवैश्यप्राप्तिः । सदस्याः सप्तदश कौषीतकशाखायां समाम्नानाच्छाखान्तरस्थाच्चास्मिन्कर्मणि दीक्षिताः सप्तदश इत्यर्थः ॥ २० ॥

**चोदना सर्वे इष्टप्रथमयज्ञा गृहपतिर्वा ॥ (ख०१) ॥ २१ ॥**

एवमापस्तम्बोऽपि । 'सर्वे ऋत्विज इष्टप्रथमयज्ञास्तस्मादाहुर्ज्येष्ठयज्ञ' ( तै० सं० ७–१–१ ) इति । तस्माज्ज्येष्ठेनेष्टत्वात्प्रथममिष्टत्वाच्चायमग्निष्टोमो ज्येष्ठयज्ञः सर्वेषामुक्थ्यादीनां मूलप्रकृतिभूत इत्यर्थः । एतेन सर्वे ऋत्विज आहिताग्नय एव भवेयुरिति

चोदना। तान्वृणुयादित्यर्थः। अथवा—विहारस्याग्नीनामन्यदीयानामप्यन्योपकारे प्रभुत्वादनाहिताग्नीनामपि द्वादशाहसत्रं स्यादिति मीमांसकाः ॥ २१॥

**सर्वे याजमानमार्त्विज्येनाविप्रतिषिद्धं कुर्युः ॥ २२ ॥**

सर्वे ऋत्विजो यजमानस्य कर्म न विप्रतिषिद्धं कुर्युः ॥ २२ ॥

**गृहपतिः परार्थानि यथा यूपाञ्जनमृतुयाज्यामित्येवंरूपाणि धर्मप्रतिषेधे भूयसां धर्मोऽनुग्राह्यते ( गृहपतेर्वा )॥ २३ ॥**

तत्रापि परार्थादविकारेणेति केचित्। गृहपतिर्यजमानः। गतम् ॥ २३ ॥

सामिधेनीषु चोदकप्राप्तं नियममाह—

**गृहपतेरेव सामिधेनीकल्पेनेति कुर्वीरन् ॥ २४ ॥**

अत्राप्यापस्तम्बीये तु विशेषः—'गृहपतेरेव सामिधेनीकल्पेनावदानकल्पेनेति प्रक्रामेयुर्यानि चान्यान्येवंरूपाणि स्युः' ( आप० श्रौ० २१-२-३ )। 'तस्य सप्तदश सामिधेनीरनुब्रूयात् ' ( ऐ० ब्रा० १९-४ ) इति बह्वृचब्राह्मणम्। गृहपतिरेव सामिधेनीकल्पः। केचिच्चित्तिः सृ(स्रु)गित्यादिवर्जं प्रत्यगाशीरिष्टा स्रुच्यन्वारब्धो गणपतिरेव समारभ्येति मन्त्रे यज्ञपतीनामिन्द्रावान्त्स्वाहेति। होता—भार्गवच्यावनाप्नवानौर्वजामदग्न्य इति। आर्षेयवरणमन्यैर्गोत्रैर्वा यावदभ्यावर्तत इत्येकः पक्षः। आश्वलायनकल्पेऽप्येवं द्रष्टव्यः। अग्ने महाꣳ असीत्यग्निजात्येकत्वात्तदा समानगोत्राणां तन्त्रेण वरणमितरेषां भेदेन समानविषये तन्त्रेणोहेन वा प्रकृतिः ॥ २४ ॥

**त्वं वरुण इति वसिष्ठराजन्यानाꣳ सामिधेनीपरिधानीया। आजुहोतेतीतरेषां गोत्राणाम् ॥ २५ ॥**

सामिधेनीपरिधानीया त्रिरन्वाहेत्युभयत्र संबन्धः ॥ २५ ॥

**नाराशꣳसो द्वितीयः प्रयाजो वसिष्ठशुनकानाम्। तनूनपादितरेषां गोत्राणाम् ॥ २६ ॥**

आपस्तम्बेऽप्येवम्। ननु—' राजन्यवासिष्ठादीनां नाराशंसो द्वितीयः प्रयाजः। तनूनपादितरेषाम् ' इत्यादि। स दीक्षणीयादिष्वनिर्दिष्टः सत्रेष्वनेककर्तृकेषु प्राप्तस्तत्र संदिह्यते। किं भिन्नकल्पा अपि संहत्य सत्रमासीरन्नुत तुल्यकल्पा एवेति। तदर्थमिदं विचार्यते—किं वासिष्ठादयो नाराशंसाद्यङ्गत्वेन कर्तारो विधीयन्ते, उत वासिष्ठादीनुद्दिश्य नाराशंसादि तादर्थ्येन विधीयत इति। तत्र वासिष्ठार्थत्वेन विधाने फलकल्पना-

प्रसङ्गात्प्रकरणबाधाच्च वासिष्ठादय एव नाराशंसाद्यङ्गत्वेन विधीयन्ते । षष्ठी च संबन्धवाचिनी । सत्रेषु च सत्रिणां प्रत्येकमेव कर्तृत्वमिति स्थितम् । अतस्तत्र वासिष्ठावासिष्ठैः क्रियमाणो नाराशंसो वासिष्ठेनापि तावत्क्रियत एवेति अविगुणस्तथा तनूनपादप्यन्यैरतोऽयं कंचित्कल्पमाश्रित्य भिन्नकल्पा अप्यधिक्रियेरन्नित्येवं प्राप्ते ब्रूमः—वासिष्ठादीन्स्वामित्वेनोद्दिश्य तादर्थ्येन नाराशंसादि विधीयते । तादर्थ्यं च क्रतूपकारद्वारेणोपपन्नमिति न फलकल्पनापत्तिः । एवं च धात्वर्थस्यान्यत्र विधानात्संनिकृष्टविधिर्भवति । प्रयाजोद्देशेन तु वासिष्ठादिविधौ धात्वर्थेऽन्यस्य विधानाद्विप्रकृष्टार्थविधानं स्यात् । ततश्च सत्रेऽन्यतरकल्पाश्रयणेऽन्येषां तेन क्रतूपकारालाभाद्विगुणः क्रतुर्न फलं साधयेत् । तस्मात्तुल्यकल्पानामेवाधिकारः ॥ २६ ॥

**सावित्राणि होष्यन्तः संनिवपेरन्हुत्वा विनिवपेरन् ॥ २७ ॥**

सावित्राणि जुहोति ( तै० सं० ९-१ ) इति विधिराग्निकः ॥ २७ ॥

**पशुभिर्यक्ष्यमाणाः संनिवपेरन्निष्ट्वा निवपेरन्गृहपतिर्वाऽरण्योः संनिवपेरन् ॥ २८ ॥**

पशुभिरिति पञ्चपश्वर्थम् । सर्वे याजमानं कुर्युः । जपानुमन्त्रणोपस्थानादिषु प्रथममार्त्विज्यं ततो याजमानमरण्योर्द्वयोर्गृहपतिर्वा । समारोपणादिनियम एका स्यादित्यर्थः ॥ २८ ॥

**य इतोऽग्निर्जनिष्यते स नः सर्वेषां यदनेन यज्ञेन जेष्यामोऽनेन पशुबन्धेन तन्नः सहासह नः साधुतुल्या य एवं पापं करवत्तस्यैव तदित्युक्तम् ॥ २९ ॥**

पशुबन्धेन वाऽन्येन वा तदर्थं षड्ढोत्रादि निरूढपशुबन्धवदित्यर्थः ॥ २९ ॥

**गृहपतिः समारोपयते । स्वयमितरे गृहपतिर्वा ॥ ३० ॥**

अरण्योरात्मनि वा गृहपतेरेवाधिकार इतरे, अन्वारम्भणमात्रमिति भावः ॥ ३० ॥

**सर्वेषाम् ॥ ३१ ॥**

ऋत्विजामेव ॥ ३१ ॥

अथ द्वादशाहे दीक्षायाः कालविशेषं विधातुं शाखान्तरमतं च विधत्ते—

**शिशिरे दीक्षन्ते । वसन्त उत्तिष्ठन्त इति विज्ञायते ॥ ३२ ॥**

दीक्षा वै देवेभ्योऽपाक्रामत्तां वासन्तिकाभ्यां मासाभ्यामन्वयुञ्जत, ( ऐ० ब्रा० १९–४ ) इत्यादि बह्वृचब्राह्मणं प्रस्तौति । एवमापस्तम्बेऽपि ॥ ३२ ॥

**शिशिरो वै तस्य प्रायणं वसन्त उदयनम् ॥ ३३ ॥**

' शिशिरो वा एतस्य प्रायणं वसन्त उत्थानमिति ( का० ब्रा० ३४–९ ) काठकब्राह्मणम् ॥ ३३ ॥

**ऋध्नुवन्ते य एवं विद्वाꣳसः शिशिरे दीक्षन्ते वसन्त उत्तिष्ठन्तीति विज्ञायते ॥ ३४ ॥**

शिशिरे दीक्षाप्रशंसार्थेयं श्रुतिरुदाहृता ॥ ३४ ॥

**षट्सु व्युष्टास्वापूर्यमाणपक्षस्य चेष्यमाणा दीक्षेरन् ॥ ३५ ॥**

एतेन महाग्निपक्षमाश्रित्य प्रयोगः— सप्तदशावरार्ध्याः पुरुषाः शिशिर एकाष्टकायामिष्टाप्रथमयज्ञास्ततआत्मन्यरण्योर्वा समारोप्यैकत्र गत्वा स्वाऽग्निसंनिधौ सर्वे सपत्नीका द्वादशाहेन सत्रभूतेन साग्निचित्येन यक्ष्यामह इति प्रजायेमहीति संकल्पः । स्वर्गोऽपि फलम् । विद्युत् । न सोमप्रवाकवरणम् । न ऋत्विग्वरणम् । अन्योन्यं त्वस्माकं गृहपतिस्त्वं ब्रह्मेत्यादिदीक्षाक्रमेण परस्परं विज्ञापयेयुर्न मधुपर्कः । देवयजनं देवतोपस्थानं द्रव्यनिर्देशः साधारणद्रव्येण । गृहपतिर्नान्दीश्राद्धं कृत्वा पूर्ववदग्निं मथित्वा विहृत्य दीक्षार्थिनः कंचित्पशुं विधत्ते— 'स पुरस्ताद्दीक्षायाः प्राजापत्यं पशुमालभते' (ऐ० ब्रा० १९–४ ) इति । यो दीक्षां वाञ्छति स पुमान्दीक्षोपक्रमात्पुरा प्रजापतिदेवताकं पशुमालभेत । द्विविधो हि द्वादशाहः—साग्निचित्यो निरग्निचित्यश्च । तत्राग्निचयनयुक्ते पशुरयमवगन्तव्यः । वायव्यो वाऽस्मच्छाखायां समाम्नातः ॥ ३५ ॥

प्रथमं सावित्रहोमाद्युखासंभरणान्तं कृत्वा पुरुषशिरोहरणं मृदोपलेपनं ततः पर्वणि पूर्ववत् । समारोप्य देवयजनं प्राप्य पशुबन्धेन यक्ष्यामह इत्याद्युदवसाय देवयजनं कृत्वा पूर्ववन्मथित्वाऽऽयतने निधाय ।

**संवाद९ संनिवपनं कृत्वा दीक्षणीयाप्रभृतीनि कर्माणि कुर्वते । य इतोऽग्निर्जनिष्यते स नः सर्वेषां यदनेन यज्ञेन जेष्यामोऽनेन सत्रेणेति ॥ (ख०२) ॥ अत्र संवादे ब्रूयुरध्वर्युर्गृहपतिं दीक्षयित्वा मध्यतः कारिणो दीक्षयति होतारं ब्रह्माणमुद्गातारम् । प्रतिप्रस्थाताऽध्वर्युं दीक्षयित्वाऽर्धिनो दीक्षयति मैत्रावरुणं ब्राह्मणाच्छꣳसिनं स्तोतारम् । नेष्टा प्रतिप्रस्थातारं दीक्षयित्वा तृतीयिनो दीक्षयति । अच्छावाकमाग्नीध्रं प्रतिहर्तारम् । उन्नेता**

नेष्टारं दीक्षयित्वा पादिनो दीक्षयति ग्रावस्तुतं पोतारं सुब्रह्मण्यम् । ततस्तं प्रतिप्रस्थाता दीक्षयति । अन्यो वा दीक्षितो ब्राह्मण एवमनुपूर्वं दीक्षेरन् । नातन्त्रीभावादेकैकमपवर्गयति । अन्यगोत्रव्यवायात् समानगोत्राणामार्षेयाणामभ्यावर्तते । पत्नीनामेकस्थाने पत्नीर्दीक्षयन्ति । तासां याजमानैर्धर्मा व्याख्याताः ॥ ३६ ॥

अत्र दर्विहोमपश्चिष्टिभ्य एवं प्रयोगः । सर्वे यजमाना याजमानं कुर्युः । अग्निं गृह्णामीत्यादि गोमज्जपान्तं सर्वे कुर्युरिति वचनादध्वर्य्वाद्यार्त्विज्यं कृत्वा पश्चाद्याजमानम् । सर्वासां पत्नीनां दीक्षाक्रमेण योक्त्रबन्धनम् । गतमन्यत् ॥ ३६ ॥

अन्वहं दीक्षामेके समामनन्ति ॥ ३७ ॥

अन्वहं सद्यः ॥ ३७ ॥

द्व्यहे त्र्यह इति कामयति आ द्वादशाहात् ॥ ३७ ॥

अग्निवाद्विकल्पः । द्व्यहे दीक्षेत त्र्यहे दीक्षेतेत्येवं कामत्या द्वादशाहात् ॥ ३८ ॥

उपसत्सु त्रयोदशो दीक्षेत । तेन [न] ब्रा(ब्र)ह्मणा भवितव्यमुपदीक्षमाणा अग्नीनुपत्रपन्न्युष्याऽऽत्मसंस्कारेण प्रक्रामे(त्) द्वादश दीक्षाः ॥ ३९ ॥

दीक्षाविशेषं तु—द्वादश रात्रीर्दीक्षितः स्यात् (तै० सं० ७–२–१०) इत्याद्युपसद्विशेषं विधत्ते—'चतुर्धा वा एतास्तिस्रस्तिस्रो रात्रयो यद्द्वादशोपसदो याः प्रथमा यज्ञं ताभिः संभरति या द्वितीया यज्ञं ताभिरारभते यास्तृतीयाः पात्राणि ताभिर्निर्णेनिक्ते याश्चतुर्थीरपि ताभिरात्मानमन्तरतः शुन्धते' (तै० सं० ७–२–१०) इति । अत्रानुष्ठेया द्वादशदिनसाध्या उपसदो याः सन्ति तास्तिस्रस्तिस्र एकैका राशिरूपेण चतुर्धा विभज्यन्ते । तत्र प्रथमराशिगताभिस्तिसृभिर्यज्ञसाधनसंपादनं भवति । द्वितीयराशिगताभिस्तिसृभिर्यज्ञमुपक्रमते । तृतीयराशिगताभिस्तिसृभिर्यज्ञपात्राणि शोधयति । चतुर्थराशिगताभिस्तिसृभिः स्वात्मनोऽन्तःशुद्धिं करोति ॥ ३९ ॥

न सनीहारसंशासनं सत्रभूते विद्यते ॥ ४० ॥

न सनीहारान्प्रहिण्वन्ति सत्रे ॥ ४० ॥

षोडशी सोमविक्रयणी ॥ ४१ ॥

षोडशिवत्सोमक्रयणी ॥ ४१ ॥

द्वादशाहायाऽऽग्रं राजानं क्रीणाति ॥ ४२ ॥

राजानं क्रीत्वोपनह्य निदधाति द्वादशाहायाऽऽग्रमिति ॥ ४२ ॥

द्वादशोपसदः ॥ ४३ ॥

द्वादशाह इति शेषः । उपसत्सु द्वादशाहे संभारयजूंषि व्याचष्ट इत्यापस्तम्बः॥४३॥

अनूपसदमग्निं चिनोति ॥ ४४ ॥

पूर्ववद्व्याख्येयम् ॥ ४४ ॥

द्व्यहमेकैका चितिः ॥ ४५ ॥

द्व्यहं द्व्यहमेकैका चितिर्भवति ॥ ४५ ॥

चतुरहमुत्तमा ॥ ४६ ॥

चितिर्भवति ॥ ४६ ॥

आ त्रिरात्रं चतुस्तनानि व्रतानि भवन्ति ॥ ४७ ॥

आङिति मर्यादा ॥ ४७ ॥

एवं त्रिस्तनानि द्विस्तनानि एकस्तनानि ॥ ४८ ॥

चतुस्तनं त्रिस्तनं द्विस्तनमेकस्तनमिति त्र्यहं त्र्यहं व्रतानि भवन्तीति शेषः ॥ ४८ ॥

भूयो व्रतमिच्छन्दध्न एकꣳ स्रुवमभ्युन्नयेत ॥ ४९ ॥

य एषां व्रतमिच्छेदभिपूरयितुं दध्न एकं स्रुवमुन्नीय नापरमुन्नयेतेति ॥ ४९ ॥

एकविꣳशतिश्छदिसदः ॥ ५० ॥

एकविꣳशस्तोमानां प्रतिष्ठेति ( तै० सं० ६-२-१० ) त्रिवृदादीनां ज्योतिषां तत्रान्तर्भावात् प्रतिष्ठार्थं भवति । देवतातद्धितग्रहणात् 'इन्द्रस्य सदः' (तै० सं० १-२. १ ) इति मन्त्रगता षष्ठी व्याख्यायत इत्येके । शाखान्तरीयं पदं ब्राह्मणं दर्शयतीत्यन्ये । छदिरधिनिदधाति ( तै० सं० ६-२-१० ) छादनार्थं कटमुपरि निदधाति । देवतासंबन्धेन हि सद ऐन्द्रम् । तस्मादिन्द्रस्य सदः सदनमित्युच्यते । इन्द्रस्य प्राधान्यात् ॥ ५० ॥

संतृण्णे अधिषवणफलके ॥ (ख०३) ॥ ५१ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे षोडशप्रश्ने प्रथमः पटलः ॥

यस्मात्संतृण्णे हनू तस्मादधिषवणफलके न संतृणत्ति विद्ध्वा प्रोते न करोति । यदधिषवणे न संतृणत्ति ( तै० सं० ६-२-११ ) इति ब्राह्मणम् । संतृण्णे अधिषवणफलके भवत इति सूत्रे शेषः ॥ ५१ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां षोडशप्रश्ने प्रथमः पटलः समाप्तः ॥

अथ षोडशप्रश्ने द्वितीयः पटलः ।

व्याख्यात एकयूपः ॥ १ ॥

गतः ॥ १ ॥

यदि यूपैकादशिनी स्यादन्वहमेकैकं यूपꣳ संमिनुयात्सर्वान्वा ॥ २ ॥

अन्वहं सद्यः । यूपं मिनोति उच्छ्रयति । एकयूपाभिप्रायेणैकवचनम् ॥ २ ॥

औपवसथ्येऽहन्यन्वहं मीयमानेष्वहरहरुपशयोऽभ्यावर्तेत ॥ अग्निष्ठ एवोदयनीये पशुमुपाकुर्यात् ॥ ३ ॥

उपेत्य शेतेऽत्र यत्रोपेत्यासुरान्बाधन्ते देवा इत्युपशयः । पचाद्यच् । तस्माद्येन कारणेन दक्षिणत उपशये उपशेते तद्भ्रातृव्यापनुत्त्यै भवतीत्यर्थः ॥ ३ ॥

श्वोभूते प्रतायते ज्योतिष्टोमः ॥ ४ ॥

अग्निष्ठान्तं सर्वेषां यूपसंमार्जनकाल एकादश यूपामि(पानि)च्छन्ति । यूपाञ्जनं गृहपति(उप)शयनी(नि)धानं दक्षिणतः सर्वेषां सकृदेव निदधाति । अस्मिन्पक्षेऽग्नीषोमीयदिने परिस्तरणान्तं महाग्निकानां मन्त्राणामुपदेशेन विकृत्यर्थत्वादनूहः । केचिदूहमिच्छन्ति । ऊहस्तु यजमानाभिधायकानां त्वग्न्यभिधायकानामपि विशिष्टेषु मन्त्रेषु सर्वत्रोहः । यजमानाभिधाने—श्वोभूते प्रतायत इति । महारात्रे बुद्ध्वा ज्योतिष्टोमः ॥४॥

वैश्वानरोऽतिरात्रः । उपावहरणकाले यावानेकाहायाऽऽप्तस्तावन्तꣳ राजानमन्यस्मिन्वासस्युपनह्योपावहरति ॥ ५ ॥ प्रत्युपनह्येतरं निदधाति ॥ ६ ॥

वैश्वानरप्रायणीयोऽतिरात्रः । वैश्वानरेण दृष्टः । सौमिकपात्रासादनकाले ध्रुवं प्रयुज्य षोडशीपात्रमपां क्षयालोकं यजमानेनाभिवहत ( इत्यादि ) पाशुकपात्रे( त्राणि )द्वे यूपरशने । एकः पशुः । एवं कुम्भ्यादयः । आ राज्ञ उपावहरणात्कृतायां ( त्वा ) यावन्तं सोममेकस्मा अह्न आप्तं मन्यते, तावन्तमन्यस्मिन्वाससि बद्ध्वा प्रत्युपनह्येतरेषामह्नामितरस्मिन्वाससि बद्ध्वा प्रत्यारोप्य तमुपावहरति ॥ ५ ॥ ६ ॥

एवमहरहः क्रियते । अन्वहं योगविमोक्षणे ॥ ७ ॥

एवमहरहरुत्तमवर्जं कृत्वाऽग्निं युनज्मि० इत्यादि सर्वं प्रकृतिवत् ॥ ७ ॥

प्रथमेऽहनि युनक्ति । उत्तमे विमुञ्चतीत्येकेषाम् ॥ ८ ॥

अयं कल्पः शाखान्तरस्थः ॥ ८ ॥

**प्रायणीयोदयनीययोरतिरात्रयोर्दशमे चाह्नि पृश्निप्राणग्रहान्गृह्णात्यभिषवमाणेन प्राकृतस्य यजुर्मानस्य प्रथमेन मन्त्रेण मीत्वा वायुरसि प्राणो नामेति दशभिर्मन्त्रैर्दश पृश्निमानानि मिमीते ॥९॥ उत्तरेणोत्तरेण यजुर्मानेन मीत्वाऽयं पुरो भुव इति दशभिर्मन्त्रैर्दश प्राणग्रहमानानि मिमीते ॥ १० ॥**

उपांश्वभिषवणकाले पृश्निप्राणग्रहे विमानम् । एवं प्रयोगः—प्राकृतं यजुर्माननमनुद्रुत्य—इन्द्राय त्वा वृत्रघ्न इत्युक्त्वा वायुरसि प्राणो नामेत्यादि ऋतस्य त्वा ज्योतिष इत्यन्तैर्दशभिः पृश्निग्रहैर्मन्त्रैर्दश मानानि मिमीते । नवनवांशमाने सर्वत्रोत्तरं यजुर्माननमनुद्रुत्य—इन्द्राय त्वा वृत्रतुर इत्युक्त्वाऽयं पुरो भुव इति दशभिः प्राणग्रहैर्दश मानानि मिमीते । अयं पुरो भुव इति प्रजापतिगृहीतया त्वया प्राणं गृह्णामीत्येवं मन्त्राः । एवमुक्तानि मानानि व्यतिषजति । इन्द्राय त्वाऽभिमातिघ्न इत्युक्त्वा वायुरसि प्राणो नाम० ज्योतिष इत्यन्तैर्दश । इन्द्राय त्वाऽऽदित्यवते, अयं पुरो भुवो गृह्णामीत्यन्तैर्दश । इन्द्राय त्वा विश्वदेव्यावते वायुरसीति दश नामानि पूर्ववत् । ततः पञ्चकृत्वस्तूष्णीं नवनवांशवत्सर्वेषु मानेषु तूष्णीकेषु च ॥ ९ ॥ १० ॥

**उत्तरोत्तरे यजुर्मानेन व्यतिषजति ॥ ११ ॥**

उत्तरपक्षो विकल्पार्थः ॥ ११ ॥

भूयसां प्रातःसवनायेत्यादिसमूढपक्षमाश्रित्य विधिं वक्ष्यामः—

**ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयावतिरात्रौ दशमं चाहः । अथेतरेषां नवानामैन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथाऽऽग्रयणाग्रमेवं त्र्यनीकास्त्रिः परिवर्तन्ते समूढं छन्दसि ॥ (ख०४) ॥ १२ ॥**

ऐन्द्रवायवग्रहमाग्रयणकाले द्यावापृथिवीभ्यां पवते, एभ्यः सुन्वद्भ्यो यजमानेभ्यः पवते मह्यमित्यादि वागग्रे प्राणान्पशुषु प्रजां मयि च यजमाने चेत्यादि सर्वेषां पशुकाल आग्नेयः पशुः । तत्राग्निर्देवीनामिमे सुन्वन्तो यजमाना इत्यूहः । परिभूरग्निमित्यादि श्रुतस्त्वमित्यन्तं सर्वेषाम् । केचिद्द्रौ समुद्रावित्यादि अध्वर्युर्ब्रह्मा चाऽऽर्त्विज्यं कृत्वा स्फ्यस्वस्तिरित्यादि आगन्त पितर इत्यन्तं सर्वेषाम् । सवनीयाभिमर्शनं गृहपतिरेव द्विदेवत्यप्रचारे भूरसीत्यादि त्रिकं सर्वेषाम् । शुक्रान्वारम्भो गृहपतिरेव तौ देवौ शुक्राम-

न्थिमी० प्रजां मयि च यजमानेषु । इडाभक्षणं सर्वेषां हविःशेषभक्षणं च । सोमभक्षणकाले सर्वे यजमानाश्चमसान्भक्षयन्त्यार्त्विज्यभक्षणं कृत्वा याजमानम् । एवं सर्वभक्षणेषु । चतुर्होत्रादि सर्वेषामग्निं नरादि दूरे दृशं गृहपतिमथर्तुमनूहो वा परार्थत्वात् । एवं प्रातःसवने प्रत्यगाशिषां सर्वैर्यजमानैः प्रयोगः कार्यः ।

माध्यंदिने ज्योतिषे हिं कुरु सर्वेषां चातुर्होत्रादि सुपर्णोऽसि० विष्णो त्वं नः० इति च सर्वेषां दधिघर्मभक्षणं च दाक्षिणौ होमौ हुत्वा उदु त्यं० चित्रमित्यादि रूपेण व इत्यादेर्लोपः । यजमानाः कृष्णाजिनानि धून्वन्तो दक्षिणापथेन गच्छन्त्युदङ्मुखोऽन्तराऽऽग्नीध्रं च सदश्च गत्वाऽग्ने(त्वाऽऽग्ने)यदानं गृहपतेरेव । ततश्चात्वालोत्करावन्तरेण दक्षिणा गच्छति । एष दक्षिणापथः । ततः सदोवीक्षणं ततश्चमसाध्वर्युश्च प्रसर्पका सदस्येभ्यो दानं गृहपतेरेव । सत्रे तु [ऋत्विग्भ्यो] न दक्षिणा पृथगृत्विग्वरणाभावात् । एवमहरहः, इत्यापस्तम्बः । न विषाणप्रासनं वैश्वकर्मणेषु यज्ञपतीनित्यूहः । शेषं पूर्ववत् ॥

आदित्यारम्भणं तृतीयसवनं यजमाना अग्निः पातु यास्ते विश्वा देवा यसे याज्यमानेभ्यः शर्म आदित्यान्वारम्भः, आशिरावनयनं च गृहपतेरेव । केचित्—सर्वेषां यजमानजपमिच्छन्ति । एतादृशेषु होतृचमसभक्षणं धारया गृहपतिरेव पितृयज्ञो यजमानः सर्पणं च सर्वेषामिति केचित् । ब्राह्मणमारभ्य आयुषे हिंकुर्विति सर्वेषां पिण्डप्रदानं च नमो वः पितर इति सर्वेषां षड्ढोता गृहपतेरेव । अग्नन्देवामेषु सुप्रजास्तु यजमानेष्वाशिषः । यज्ञायज्ञिये एकया प्रस्तुतं भवत्यथ नमस्ते अस्तु मा मा हिंसीः, इति । अहरहःपक्षे वा पत्नेजनीनयनं सर्वासां पत्नीनां, ग्रहणकाले पृथगेव गृह्णाति । अस्मिन्काल उत्तरस्मा[दा]वसतिं परिगृह्णाति यथा त्वं सूर्यासीति सर्वेषामायुर्मे इन्द्रियमिति च वर्तमान एवातिरात्रे षोडशी चमसेषु प्रक्षालितेषूत्तरस्मा[द]आज्ञेया यजमानस्य व्रतधुगित्यादिभिः पयांसि विशास्ति दोहं याजमानं च सर्वेषामत्र प्रतिप्रस्थाता पयस्यार्थं सायंदोहं दोहयति मैत्रावरुण्याः । एवमादयः सत्रे अहीने च साधारणाः ।

नन्वस्ति द्वादशाहे त्र्यनीका । ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः । अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः । अथ शुक्राग्रमथाऽऽग्रयणाग्रमथैन्द्रवायवाग्रमथ शुक्राग्रमथाऽऽग्रयणाग्रमथैन्द्रवायवाग्रमथ शुक्राग्रमथाऽऽग्रयणाग्रमिति । तत्र द्वादशाहगतेषु द्वितीयतृतीयचतुर्थेषु त्रिष्वहःसु क्रमेणैन्द्रवायवाग्रत्वशुक्राग्रत्वाग्रयणाग्रत्वानि विहितानि । तेष्वाद्यं रथंतरनिमित्तम् । द्वितीयं बृहन्निमित्तम् । एतच्च प्रकृतौ व्यवस्थितम् । तदुभयमत्र चोदकेन प्राप्तम् । तत्र चतुर्धा संशयः— अनुवादो वा परिसंख्या वाऽर्थवादो वा विधिर्वेति । तत्र प्राप्तत्वादनुवाद इति चेन्न वैयर्थ्यापत्तेः । तर्हि

मणान्तरपरिसंख्याऽस्त्विति चेन्न दोषत्रयापत्तेः। चतुर्थेऽहन्यप्राप्तस्याऽऽग्रयणाग्रत्वस्य विधित्सितस्य प्रशंसार्थोऽयमर्थवादः, इति चेन्न लक्षणावृत्तिप्रसङ्गात्। तस्मादाग्रयणाग्रत्वे यथा विधिस्तथेतरयोरपि द्रष्टव्यः। न च प्राप्तत्वादविधिरिति वाच्यम्। तस्य विधेर्नैमित्तिकत्वाभ्युपगमात्। रथंतरादिनिमित्तकयोरेव हि चोदकेन प्राप्तिः। प्रयोजनं तु द्वादशाहविकृतिषु यत्र क्वापि रथंतरादिनिमित्तत्वाभावेऽप्यैन्द्रवायवाग्रत्वसिद्धिः। ( १०-५-२२ ) ॥ १२ ॥

**अथ व्यूढं छन्दस्यैन्द्रवायवाग्रौ प्रायणीयोदयनीयावतिरात्रावथैतरेषां दशानामैन्द्रवायवाग्रं प्रथममहः। अथ शुक्राग्रमथ द्वे आग्रयणाग्रे। अथैन्द्रवायवाग्रमथ द्वे शुक्राग्रे। अथाऽऽग्रयणाग्रमथ द्वे ऐन्द्रवायवाग्रे ॥ १३ ॥**

[भरत]द्वादशाहस्य कर्मफलं पूर्ववत्। भरतद्वादशाहेन साग्निचित्येन सत्रभूतेन यक्ष्यामह इति सत्रे, अहीने तु अहीनभूतेनेति विशेषः। एकश्चेद्यक्ष्ये काठकाग्निना यक्ष्ये काठकाग्नियुक्तेनेति द्वादशातिरात्रा अग्निष्टोमा रथंतरसामानः प्रायणीयोदयनीयौ चातिरात्रावग्निष्टोमौ तथाऽप्येकविंशतिश्छदिःसदः। न पृष्ठधर्माः। अन्यत्सर्वं पूर्ववत्। पृश्निप्राणग्रहणादि (दीन्) ग्राह्यघृतमध्वशनाविवाक्यमानसादीनि भवन्ति। समूढवत्व्यनीका पूर्ववत्। काठकोऽपि न लभ्यते न व्यूढः॥

ननु द्विविधो हि द्वादशाहः—समूढो व्यूढश्च। तत्र समूढः पूर्वमुदाहृतः। अथ व्यूढ उदाह्रियते— ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ। अथैतरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहः। अथ शुक्राग्रमथ द्वे आग्रयणाग्रे। अथैन्द्रवायवाग्रमथ द्वे शुक्राग्रे अथाऽऽग्रयणाग्रमथ द्वे ऐन्द्रवायवाग्रे इति। तत्र समूढस्य तावत् प्रकृतित्वमविवादम्। तद्वद्व्यूढोऽपि किं प्रकृतिः किं वा विकृतिरिति संशये प्रकृतिरिति प्राप्तम्। कुतः—विधिसाम्यात्। यथा समूढप्रकारः क्रत्वर्थो विहितस्तथा व्यूढप्रकारोऽपि। न चात्र कश्चिद्विशेषोऽस्ति। येन तयोः प्रकृतिविकृतिभावो निश्चीयेत। न च प्रकारद्वयस्य प्रकृतित्वमदृष्टचरम्। रथंतरबृहत्पृष्ठयोर्ज्योतिष्टोमप्रकारयोस्तद्दर्शनादिति पूर्वः पक्षः। व्यूढः समूढस्य विकृतिः। कुतः। लिङ्गदर्शनात्। 'ऐन्द्रवायवस्य वा एतदायतनं यच्चतुर्थमहः' इति व्यूढे श्रूयते। एतच्च विकृतित्वे सति भवति नान्यथा। तथा हि—व्यूढे प्रायणीयोदयनीयव्यतिरिक्तेषु दशस्वहःसु यच्चतुर्थं तदाग्रयणाग्रत्वादैन्द्रवायवस्याऽऽयतनम्। समूढे तु तदहर्नवानामह्नां मध्ये द्वितीयत्रिकादित्वादैन्द्रवायवाग्रम्। तच्च व्यूढस्य विकृतितायां चोदकेन प्राप्यमाणं विधित्सिताग्रयणाग्रत्वस्तुतयेऽनूद्यत इत्युक्तम्। किं च यः

कामयेत बहु स्यां प्रजायेयेति कामाय व्यूढो विधीयते। तथा च सति समूढवत् क्रत्वर्थे विध्यभावाद्रथंतरबृहत्पृष्ठवैषम्येण विकल्पितप्रकृतित्वं नास्ति। ततः समूढस्य द्वादशाहस्य विकृतिः। अहर्गणेष्वनयोरन्यतरस्यातिदेशः पूर्वपक्षिणः प्रयोजनम्। समूढस्यैवातिदेश इति सिद्धान्तः (१०–५–२४) ॥ १३ ॥

**तत्र भक्षमन्त्राः पवमानाभिमन्त्रणानि च**
**येन येन च्छन्दसा निगदाश्च तस्य स्थाने**
**ताभिः संनमेत व्यूहेन व्याख्यातम् ॥ १४ ॥**

ननु—व्यूढे द्वादशाहे भक्षमन्त्रमानं तदुभयमन्त्रपरिधिकपालानि चोदकप्राप्तानि। तत्र भक्षमन्त्रेषु सवनत्रयगतेषु गायत्रीछन्दसस्त्रिष्टुप्छन्दसो जगतीछन्दस इति पदत्रयं श्रूयते। तथा परिधिस्तावकेऽर्थवादे पठ्यते—गायत्रो मध्यमः परिधिस्त्रैष्टुभो दक्षिणो जागत उत्तर इति। तथा कपालविषयं वाक्यं पठ्यते—अष्टाकपालः प्रातःसवनीय एकादशकपालो माध्यंदिनीयो द्वादशकपालस्तार्तीयसवनिक इति। अत्राष्टत्वादिभिस्त्रिभिः संख्याभिर्गायत्र्यादिच्छन्दांसि तत्तत्पादाक्षरस्मृतिद्वारेणोपस्थाप्यन्ते। एवं स्थिते सति व्यूढप्रकरणे छन्दोव्यतिक्रमः पठ्यते—'छन्दांꣳसि वा अन्योन्यस्य लोकमभ्यध्यायन्—गायत्री त्रिष्टुभस्त्रिष्टुब्जगत्या जगती गायत्र्याः, इति। तत्र संशयः—सोऽयं छन्दोव्यतिक्रमो भक्षपवमानपरिधिकपालरूपाणामर्थानामुभयविधमन्त्रगतच्छन्दोवाचिशब्दानां च कर्तव्यः किं वा तेषां शब्दानामेवेति। तत्र मन्त्रगतानामेवेति विशेषाश्रवणात्सर्वत्र व्यतिक्रम इत्याद्यः पक्षः। तेन गायत्रीशब्दनिर्दिष्टः प्रातःसवनीयो भक्षस्त्रिष्टुप्शब्दितस्य माध्यंदिनीयस्य भक्षस्य स्थाने। स च तृतीयसवनीयस्य स्थाने, सोऽपि प्रातःसवनीयस्य स्थाने। तथा बहिष्पमानो माध्यंदिनपवमाने माध्यंदिनपवमानस्तृतीयसवने। आर्भवपवमानः प्रातःसवने। तथा मध्यमः स्थविष्ठः परिधिर्दक्षिणतः। अणीयान् द्राघीयानुत्तरतः, अणिष्ठो ह्रसिष्ठो मध्यतः। तथाऽष्टाकपालो माध्यंदिने सवने। एकादशकपालस्तृतीयसवने। द्वादशकपालः प्रातःसवने। सोऽयमर्थव्यतिक्रमः। मन्त्रद्वयशब्देष्वप्येवं योजनीयमिति प्राप्ते ब्रूमः—

छन्दांसीति वाक्येऽर्थानां व्यतिक्रमो नोक्तः। अतो मन्त्रगतगायत्र्यादिशब्दानामेव व्यतिक्रमः। यस्त्वर्थेषु गायत्र्यादिशब्दप्रयोगः स प्रशंसार्थः। भक्षादयर्थानां मुख्यच्छन्दस्त्वाभावादिति सिद्धान्तः (१०–५–२५) ॥ १४ ॥

**एवमुत्तरेषु पृष्ठ्याहेषु त्रीनतिग्राह्यान्गृह्णाति।**
**आग्नेयमेकविंशे। ऐन्द्रं त्रिणवे। सौर्यं त्रय-**
**स्त्रिंशे ॥ १५ ॥**

उत्तरेषु पृष्ठ्याहेष्विति वचनात्तत्र ॥ १५ ॥

पूर्वस्मिन्त्र्यहे वाजसनेयिनः समामनन्ति । यत्र गौर-
वीत॰ साम तत्र सर्वान्पूर्णान् ग्रहान्गृह्णीयात् ॥१६॥

परिपठन्ति वाजसनेयब्राह्मणे ॥ १६ ॥

अथ पशुक्लृप्तिराग्नेयं प्रायणीयोऽतिरात्र आल-
भन्ते श्वोभूते सारस्वतीं मेषीम् । एव॰ हि विह-
तानैकादशिनानन्वहमालभन्त आग्नेयमुदयनीये
सौर्यं ब्रह्मवर्चसकामानाम् ॥ १७ ॥

अथ पशुक्लृप्तिः प्रदर्श्यते । आलभन्त इति बहुयजमानाभिप्रायम् । श्वोभूते महारात्रे बुद्ध्वा प्रायणीयमुदयनीयमुपयन्ति । उभौ षोडशिमन्तौ द्वादशाहस्य षोडसी ( शी )-मतिरात्र इत्यार्षेयकल्पसूत्रवचनात् । अग्ने नयेत्यादिसमं सर्वमुपावहरति अग्निं युनज्मीति । उपांश्वभिषवकाले पृश्निप्राणग्रहैर्मानं पूर्वमेवोक्तम् । प्रायणीयोदयनीययोर्दशमेऽहनीति त्रयः कल्पाः सूत्रकारेणोक्ताः । त्रिष्वहःसु यथासंख्यमिति केचित् । सर्वत्र विकल्प इति केचित् । ऐन्द्रवायवाग्रं पशुकाल आग्नेयः खण्डः । ए ( ऐ ) कादश ( शि ) नेऽग्निष्ठ उपाकरोति । ऐन्द्राग्नो वेति भाष्यकृत् । सारस्वतीं मेषीमिति सूत्रकारमतिः । सूर्यं ब्रह्मवर्चसकामस्योपशयानिर्देशः कृष्णमृगस्ते पशुरित्यहरहर्यूपमानपक्षे । अग्नीषोमीयकाले—एकं मिनोति तत्तु प्रायणीये मानं, तस्मिन्नेव मिमीते आग्नेयमुपाकरोति तस्य दक्षिणत उपशयनीयनिर्देशश्च । श्वोभूते सारस्वतमुपाकरोति द्वितीयं मिन्वन्ति पश्वर्थत्वाद्यूपस्य ( ब्रह्मवर्चसपशुकामाः कामाः । ) प्रधानं तस्माद्दक्षिणतोऽपवर्गः । यूपानामवि ( मि ) नोदपवर्गतो ( तः ) सारस्वतस्य यूपस्य दक्षिणत उपशयः स्थाप्यते । सारस्वतमुपाकृत्योपशयानिर्देशः । एवमहन्युत्तरोत्तरः पशुः । यूपैकादशिन्यां पूर्ववत् ॥ १७ ॥

दक्षिणाकालेऽन्वहं द्वादश शतान्यहीनभूते
ददाति ॥ १८ ॥

द्वादश शतानि ददात्यहीने ॥ १८ ॥

सत्रे तु दाक्षिणौ होमौ हुत्वेदमहं मां कल्याण्यै
कीर्त्यै स्वर्गाय लोकाय दक्षिणां नयामीति यज-
मानाः कृष्णाजिनानि धून्वन्त उदञ्चो दक्षिणाप-
थेनातियन्ति ॥ १९ ॥

सत्रे त्वयं विशेषः ॥ १९ ॥

**एवमहरहः क्रियते ॥ २० ॥**

एवमुक्तप्रकारेण ॥ २० ॥

**उत्तमेऽहनि कृष्णविषाणाः प्रास्यन्ति ॥ २१ ॥**

गतः ॥ २१ ॥

**सख्यानि विसृजन्ते ॥ २२ ॥**

उत्तम एवाहनि सख्यानि विसृजन्ते ॥ २२ ॥

**पूर्वस्मिन्नहन्युत्तरस्मा अह्ने यज्ञायज्ञीयं प्रति वसतीवरीर्गृह्णाति ॥ २३ ॥**

यज्ञायज्ञीयकाले वर्तमाने वसतीवरीः ॥ २३ ॥

**पूर्वस्मिन्नहन्युत्तरस्मा अह्ने स्तोत्रीयमनुरूपं कृत्वा शंसति ॥ (ख०५) ॥ २४ ॥**

**इति सत्याषाढहिरण्यकेशिसूत्रे षोडशप्रश्ने द्वितीयः पटलः ।**

अनुरूपं सदृशम् । ' नात्राहीनसंततयः ' इति वचनाम्न्यायप्राप्तमेतत् ॥ २४ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचंन्द्रिकायां षोडशप्रश्ने द्वितीयः पटलः ।

=====

अथ षोडशप्रश्ने तृतीयः पटलः ।

---

**वर्तमानेऽतिरात्रे पयांसि विशास्ति ॥ १ ॥**

वर्तमान एवातिरात्र उत्तरस्मा अह्ने पयांसि विशास्तीत्यापस्तम्बः । वर्तमान एवातिरात्रे षोडशिचमसेषु प्रक्षालितेषूत्तरस्मा अह्ने या यजमानस्य व्रतधुगित्यादिभिः पयांसि विशास्ति । दोहनादयो गताः ॥ १ ॥

**श्वः सुत्यामिन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोमपेभ्यः सोमं प्रब्रूतादिति मैत्रावरुणेनोच्यमाने स्वमगारं प्रविश्याऽऽग्नीध्रः श्वः सुत्यामिन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोमपेभ्यः सोमं प्रब्रवीमि ब्रह्मन्वाचं यच्छ सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति संप्रेष्यति ॥ २ ॥**

अहरहर्योगविमोक्षपक्षे हारियोजने हुते श्वः सुत्यामिति । तदाऽऽग्नीध्र आग्नीध्रमण्डपं प्रविश्य संप्रेष्यति । श्वः सुत्यामिति ॥ २ ॥

**अद्य सुत्यामेतस्मिन्नहनि ब्रूयाल्लुप्येत वा श्वः सुत्यामितरेषु ॥ ३ ॥**

'स वै खलु श्वः सुत्यामिति ब्रूयादित्याश्मरथ्यः । अद्य सुत्यामित्यालेखनः' (आप० श्रौ० २१-६-३) इत्यापस्तम्बः । अत ऊर्ध्वं श्वः सुत्यामिति नात्र संख्या ॥ ३ ॥

**पत्नीसंयाजान्तमहः संतिष्ठते ॥ ४ ॥**

पत्नीसंयाजान्तं कर्म समाप्यते ॥ ४ ॥

**सꣳस्थिते ब्रह्मा वाचं विसृजते ॥ ५ ॥**

संस्थितेऽहनि पत्नीसंयाजान्ते ब्रह्मा वाग्विसर्गं करोति ॥ ५ ॥

**परिहरन्त्युदकं पत्नीभ्यः ॥ ६ ॥**

एकस्मिन्काले परिहरन्ति पत्नीभ्य उदकं पानार्थमित्यर्थः ॥ ६ ॥

**हरन्ति समिद्धाराः ॥ ७ ॥**

यजमानपुरुषाः समिदाहरणम् ॥ ७ ॥

**प्रत्येत्याऽऽहवनीये समिधोऽभ्यादधति ॥ ८ ॥**

पुनरागत्यैताः समिध आदायाऽऽदधति आहवनीये ॥ ८ ॥

**एवमहरहः क्रियेरन् ॥ ९ ॥**

गतः ॥ ९ ॥

**तस्मिन्नहनि पृष्ठ्यः षडहः ॥ १० ॥**

अथोत्तरस्मा अह्ने वसतीवरीणां परिहरणं, सन्नाभिमन्त्रणे कृते । सवनीयस्य शाखाच्छेदनमिध्माबर्हिषोराहरणादि । उभयपक्षे वसतीवरीग्रहणं पूर्वेद्युरेव । एतेषामेकस्मिन्नप्याक्रियमाणे नमो ब्रह्मण इत्याहुतिः ॥ १० ॥

**त्रिवृदग्निष्टोमो रथंतरसामा ॥ ११ ॥**

उपयन्तीविशेषः । सौमिकपात्रप्रयोगकाल आग्नेयातिग्राह्यपात्रमेव पूर्वस्मिंस्त्र्यह इति विधौ क्रतुकरणकाले न होमः, यजुरुक्त्वा प्रतपनमैन्द्रवायवाग्रं, पशुकाले त्रिवृद्भ्यः सवनीयसारस्वतीं मेषीमुपाकरोति । उत्तरतोऽग्निष्ठस्योपशायनिर्देशो न तु विधिः । पूर्ववद्दक्षिणाकाले कुर्युः ॥ ११ ॥

**रथशब्देन माहेन्द्रस्य स्तोत्रमुपाकरोति ॥ १२ ॥**

न्यायसूत्रे सूत्रान्तरे व्याख्यानात्परिभाषार्थमिदं सूत्रमापस्तम्बेऽप्येवम् ॥ १२ ॥

**उपाकरणमन्त्रस्य शब्दो विकारः ॥ १३ ॥**

माहेन्द्रस्तोत्रोपाकरणकाले रथघोषेण माहेन्द्रस्तोत्रोपाकरणं, शब्दो मन्त्रस्थाने

तदाऽपि बिभर्षि च पूर्ववत् । यज्ञायज्ञीये स्तूयमाने वसतीवरीः परिगृह्णाति । प्रतिदिनपक्षे न विषाणप्रासनं पत्नीसंयाजान्तं समिदाधानान्तं पूर्ववत् ॥ १३ ॥

**पञ्चदश उक्थ्यो बृहत्सामा ॥ १४ ॥**

श्वः सुत्यामित्यादि । रात्रौ वसतीवरीपरिहरणादि परिस्तरणान्तं तन्त्रम् । श्वोभूते महारात्रे बुद्ध्वा पञ्चदश उक्थ्यो बृहत्साम, सोमपात्रासादनकाल ऐन्द्रातिग्राह्यपात्रमेव वाजसनेयिमतपक्षे पूर्ववत् । सोमोपाहरणम्, अग्निं युनज्मि, प्रतिदिनपक्षे शुक्राग्रमेक एवातिग्राह्य ऐन्द्र एव । पशुकाले सौम्यो व्यत्यासेन दक्षिणे यूपेऽग्निष्ठस्य सोपशयनिर्देशः ॥ १४ ॥

**दुन्दुभिशब्देन माहेन्द्रस्य स्तोत्रमुपाकरोति ॥ १५ ॥**

माहेन्द्रस्तोत्रोपाकरणकाले दुन्दुभिशब्देन मुरजः प्रसिद्धस्तस्य घोषेण स्तोत्रोपाकरणमित्यर्थः ॥ १५ ॥

**यदि स्तनयित्नुर्भवति स एव स्यादुपाकरणमस्य शब्दो विकारः ॥ १६ ॥**

स्तनयित्नुघोषेण वा पूर्ववत् । दक्षिणाकाले यज्ञायज्ञीये वसतीवर्यादि पत्नीसंयाजान्तं समिदाधानं च पूर्ववत् । अहीनसंततयो रात्रौ परिस्तरणान्तम् ॥ १६ ॥

**सप्तदश उक्थ्यो वैरूपसामा ॥ १७ ॥**

श्वोभूते महारात्रे बुद्ध्वा सप्तदश उक्थ्यो वैरूपसामा । पात्रासादनकाले सौर्यातिग्राह्यपात्रमेकमेव । क्रतुकरणमुक्थ्यवत् । आग्रयणाग्रमाग्रयणाग्रे सौर्योऽतिग्राह्यः । पशुकाले त्रिवृद्भ्यां परिवीय पौष्णं श्याममग्निष्ठस्योत्तरे यूप उपशयनिर्देशः ॥ १७ ॥

**आधावेन माहेन्द्रस्तोत्रमुपाकरोति ॥ १८ ॥**

तस्मिन्काल आधावनम् ॥ १८ ॥

**बर्हिषो विकारस्तस्मिन्नुपाकृते प्रस्तुत उद्गाताऽऽधावेन धुनुते ॥ १९ ॥**

माहेन्द्रस्तोत्रोपाकरणकाल आधावेन बर्हिःस्थानेन धुनुते स्तोत्रोपाकरणम् । प्रस्तुते उद्गाताऽऽधावेन धुनुते । पूर्ववद्दक्षिणाकाले ददाति । यज्ञायज्ञीयकाले वसतीवर्यादिसमिदाधानान्तं पूर्ववदहीनसंततयः परिस्तरणान्तम् ॥ १९ ॥

**एकविंशः षोडशी वैराजसामा ॥ २० ॥**

महारात्रे बुद्ध्वा श्वोभूत एकविंशं षोडशिनं वैराजसामानमुपयन्तीति शेषः । अथवोक्थ्यवन्न षोडशीये ( याऽ ) न्तरेष्टा । स उक्थ्य इति वचनात् । अत्र यदि षोडशी त्रीनतिग्राह्यानेव पूर्वस्मिन्र्व्यहपक्ष उत्तरस्मिन्र्व्यहपक्षे, अद्यप्रभृत्याग्नेयमतिग्राह्यं गृह्णाति ।

ऐन्द्रवायवाग्रः । पशुकाले शितिपृष्ठो बार्हस्पत्यः पशुरग्निष्ठस्य दक्षिणस्य दक्षिण उपशयनिर्देशः ।। २० ।।

**न्यूङ्खं भवति हविष्कृता(दा)श्रुतप्रत्याश्रुतेषु प्रतिगरे न्यूङ्खति ॥ २१ ॥**

अस्मिन्नहनि भवन्ति न्यूङ्खाः । अर्धौकारादयो न्यूङ्खा ओ ओ इत्यादि हौत्रविषयम् । तदाश्वलायनेन भगवता चतुर्थेऽहनि प्रातरनुवाकप्रतिपदीत्यादिना प्रपञ्चितम् । तत्तदुक्तेनैव मार्गेण प्रतिगरः ।। २१ ।।

**अरणीभ्यां माहेन्द्रस्य स्तोत्रमुपाकरोति बर्हिषो विकारः ।। २२ ।।**

पूर्ववद्दक्षिणाकाले ददाति । माहेन्द्रस्तोत्रोपाकरणकाले बर्हिःस्थानेऽरणी दर्भद्वयं चोपाकृतम् ।। २२ ।।

**तस्मिन्नुपाकृते प्रस्तुते ॥ (ख०६) ॥२३॥ उद्गाता दक्षिणमूरुमवकाभिरवच्छाद्य तत्रारणी संनिधायाग्निं मन्थति ॥ २४ ॥ ( तं ) जातमुद्गाताऽभिहिंकृत्य प्रस्तोत्रे प्रयच्छति ॥ २५ ॥ प्रस्तोताऽध्वर्यवे ॥ २६ ॥**

साम प्रस्तुतं भवति स्तोमभागेऽप्युक्तेऽथोद्गातुर्दक्षिणमूरुं शैवालैरेवावकीर्य तस्मिन्नरणीद्वयं निधाय मथनाद्य( श्नीतोऽ)ध्वर्युप्रतिप्रस्थातारौ । तं जातमुद्गाताऽभिहिंकृत्याग्नेरुपरि हिंकरोति । तमुद्गाता प्रस्तोत्रे प्रयच्छति ।। २३ ।। २४ ।। २५ ।। २६ ।।

**तꣳ सोऽग्रेण धिष्णियान्पर्याहृत्याऽऽहवनीयेऽनुप्रहृत्य प्रेद्धो अग्ने दीदिहीति विराजाऽभिजुहोति ।। २७ ।।**

तं प्रस्तोताऽध्वर्यवे । अध्वर्युरुत्तरेण धिष्णियान्पर्याहृत्याऽऽग्नीध्रियस्यैवोत्तरेण नीत्वाऽऽहवनीये क्षिपति प्रेद्धो अग्न इति विराजाऽभिजुहोति । गतमन्यत् ।। २७ ।।

**त्रिणव उक्थ्यः शाक्वरसामा ।। २८ ।।**

केचित्—यज्ञायज्ञीयकाल इत्यादि पत्नीसंयाजान्तं समिदाधानान्तं पूर्ववत् । अहीनसंततयः पूर्ववत्परिस्तरणान्तम् । श्वोभूते महारात्रे बुद्ध्वा त्रिणवमुक्थ्यं शाक्वरसामानमुपयन्तीति शेषः । महानाम्नी पृष्ठं न त्वातिग्राह्याः । पूर्ववत्त्र्यहपक्ष ऐन्द्र एकः शुक्राग्रः । पशुकाले शिल्पो वैश्वदेवः । अग्निष्ठप्रभृत्युत्तरतश्चतुर्थे उपशयनिर्देशः पूर्ववद्दक्षिणाकाले ।। २८ ।।

**अद्भिरवकावास्ताभिर्माहेन्द्रस्य स्तोत्रमुपाकरोति ।**
**बर्हिषो विकारस्तस्मिन्नुपाकृते प्रस्तुते ॥ २९ ॥**

माहेन्द्रस्य स्तोत्रोपाकरणकाले बर्हिःस्थानेऽद्भिरवकावास्ताभिरवका यास्वप्सु क्षिप्तास्ताभिस्तोत्रोपाकरणं बर्हिर्भ्यां चोपाकृतं साम प्रस्तुतं भवति ( आप० श्रौ० २१–७–१० ) इत्यापस्तम्बः ॥ २९ ॥

**तिस्रः सहर्षभा गावोऽग्रेण सदोऽपरेणाऽऽग्नीध्र-**
**मुदीचीनं दक्षिणापथेनातिक्रमयन्ति ॥ ३० ॥**

तिस्रः सर्षभास्तिस्रो गावः सह बलीवर्देनाग्रेण सदोऽपरेणाऽऽग्नीध्रमुदीचीर्नयन्ति । दक्षिणापथेनाहीने दक्षिणादानमृत्विजाम् । सत्रे तु न दानं न दाक्षिणाधर्माः । पत्नीसंयाजादि पूर्ववत्समिदाधानान्तमहीनसंततयः परिस्तरणान्तम् ॥ ३० ॥

**त्रयस्त्रिꣳश उक्थ्यो रैवतसामा [ नम् ] ॥ ३१ ॥**

उपयन्तीति शेषः । श्वोभूते महारात्रे बुद्ध्वा त्रयस्त्रिंश उक्थ्यो रैवतसामानमुपयन्ति न त्वतिग्राह्याः । पूर्ववत्त्र्यहपक्ष उत्तरत्र्यहपक्षे च सौर्यातिग्राह्यमेकमेव प्रयुनक्ति । पूर्ववत्त्र्यहपक्षोत्तरयोर्न त्वतिग्राह्याः । प्रथमे सर्वान्गृह्णातीति केचित् । अग्निष्टोमत्वादाग्रयणाग्रः । पशुकाले ऐन्द्रः, इन्द्राय त्वा जुष्टमुपाकरोमीति । दक्षिणतश्चतुर्थ उपशयनिर्देशः पूर्ववत् ॥ ३१ ॥

**न्यूङ्खमेतदहर्भवति ॥ ३२ ॥**

न्यूङ्खास्तदनुसारेण प्रतिगरः ॥ ३२ ॥

**स्वयमृतुयाजं भवति ॥ ३३ ॥**

स्वयं गृहपतिः ( आप० श्रौ० २१–७–१४ ) इत्यापस्तम्बः ॥ ३३ ॥

**अध्वर्यू यजतमित्युच्यमाने हविर्धाने प्रविश्याध्वर्युः प्रैष उत्तरयर्चा यजति उत्तरेण वा प्रैषेण ॥ ३४ ॥**

स्वयमध्वर्युर्ऋतुयाजं यजति । स्वयं गृहपति(ते) यजेत्यभिज्ञायाध्वर्युर्हविर्धाने प्रविश्य प्रैष उत्तरयर्चा । स्पष्टमन्यत् ॥ ३४ ॥

**अश्विना पिबतं सुतं (मधु) दीद्यग्नी शुचिव्रता ।**
**ऋतुना यज्ञवाहसा । ऋतुना सोमं पिबतं वौष-**
**डिति यद्यव्यूढः ( वतमित्यव्यूढे यजति) ॥३५॥**

वौषडिति वषट्करोति । एवं गृहपतेर्यद्यव्यूढः ॥ ३९ ॥

व्यूढे त्ववाञ्चमद्य यद्वं नृवाहणः रथं युञ्जाथा-
मिह वां विमोचनम् । पृङ्क्तः हवींषि मधुना
हि कं गतमथा सोमं पिबतं वाजिनीवसू ।
ऋतुना सोमं पिबतं वौषडिति तस्य प्रचरितं
मरुत्वतीयैर्भवति ( बतमिति व्यूढे )॥ ३६ ॥

व्यूढपक्षेऽवाञ्चमद्येति दक्षिणाकाले प्रत्तस्य प्रचरितं मरुत्वतीयैर्भवति ॥ ३६ ॥

यस्माद्गृहमाहेन्द्रायास्मिन्कृते प्रतिप्रस्थाताऽपरेणाऽऽ-
ग्नीध्रमुदीचीं तन्तिं वितत्य तस्यां वत्सान्
बध्नाति ॥ ३७ ॥

अगृहीतो माहेन्द्रः । भक्षिते मरुत्वतीये । अत्र प्रतिप्रस्थाता करोति कर्मोत्तरेणाऽऽ-
ग्नीध्रागारमण्डपमुदीचीं वत्सतन्तिं वितत्य प्रसार्य तस्यां वत्सान्बध्नाति ॥ ३७ ॥

दक्षिणेन मांजोलीयं मातृरुपरुन्धन्ति ॥ ३८ ॥

बध्नन्ति वत्सानाम् ॥ ३८ ॥

बर्हिःस्थानेऽद्भिर्दूर्वावास्ताभिर्माहेन्द्रस्य स्तोत्रमुपा-
करोति । बर्हिषो विकारः ॥ ३९ ॥

तत्र स्थिता भवन्ति । बद्धा अबद्धा वा । ततो माहेन्द्रो गृह्यते बर्हिःस्थानेऽद्भिर्दूर्वा-
वास्ताभिर्या अप्सु दूर्वाः क्षिप्तास्ताभिः स्तोत्रोपाकरणमित्यर्थः ॥ ३९ ॥

तस्मिन्नुपाकृते प्रस्तुते वत्सान्प्रमुच्य मातृभिः सं-
सृज्योदीचीस्तस्य दक्षिणापथेन संचा[र्य]माना
( णा ) अतिवित्सन्ति (संतिष्ठते पृष्ठ्यः षडहः) ॥
( ख०७ ) ॥ ४० ॥

इति सत्याषाढहिरण्यकेशिसूत्रे षोडशप्रश्ने तृतीयः पटलः ॥

ताभिः स्तोत्रोपाकरणं बर्हिर्भ्यो चोपाकृतं सामाप्रस्तुतमथैतान्वत्सान्मातृभिः संसृज्यो-
त्तरेणाऽऽग्नीध्रं सांकाशिनं कुर्वन्ति गवां वत्सानां च प्रेष्याः । ता अग्रेण सदोऽपरेणाऽऽ-
ग्नीध्रमण्डपमुदीचीं नीत्वा दक्षिणापथेनाधिव्युच्छ्रय(तिवित्स)न्ति त्वरितं नयन्तीत्यर्थः ।
सत्रे तु न दानं निषेधात् । अहीने तु ऋत्विग्भ्यो ददाति । पूर्ववद्यज्ञायज्ञीयकाले
पत्नीसंयाजान्तम् । समित्पक्षे पञ्च संतिष्ठते पृष्ठ्यः षडहः ॥ ४० ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोग-
चन्द्रिकायां षोडशप्रश्ने तृतीयः पटलः ॥

अथ षोडशप्रश्ने चतुर्थः पटलः ।

---

**संस्थिते पृष्ठ्ये षडहे । घृतं मधु वा प्राश्नन्ति ॥ १ ॥**

संस्थिते घृतं मधु वा प्राश्नन्ति । सत्रिणां मधुप्राशनं विरुद्धमिति मीमांसकाः । सत्रिणां मधुप्राशनस्य विद्यमानत्वात्सूत्रकारस्याप्यविरुद्धमेव । अहीने नियमः—सर्पिर्मधुभ्यामृत्विजो भोजयेदहीनेष्विति च्छन्दोगवचनात् । सत्रे तु घृतमधुभ्यामित्यादि । पूर्ववदहीनसंततयः । परिस्तरणान्तम् ॥ १ ॥

**अन्वहमुक्थ्यास्त्रयश्छन्दोमाः ॥ २ ॥**

श्वोभूते महारात्रे बुद्ध्वा दशममहरविवाक्यं चतुर्विंशमग्निष्टोममुपयन्ति ॥ २ ॥

अग्ने नयेत्यादिप्रायणीयोदयनीययोर्गणमु(प्र उ)च्यते—

**चतुर्विंशश्चतुश्चत्वारिंशोऽष्टाचत्वारिंश-**
**श्चतुर्विंशमविवाक्यम् ॥ दशममहरग्निष्टोमः**
**सोमो रथंतरसामा(नम् ।) ॥ ३ ॥**

दशममहरस्मिन्दशमेऽहनीत्यर्थः ॥ ३ ॥

**नात्र कश्चन कस्मैच नो (न) व्याहते ॥ ४ ॥**

कश्चन कश्चिदपि उपहताय विनाशिताय पदार्थान् विभ्रष्टाय न व्याहते न व्याख्यातव्यमिदं त्वया विनाशितमेतत्प्रायश्चित्तमिति भावः ॥ ४ ॥

**ये बाह्या दशीकवः स्युस्ते विब्रूयुर्यदि तत्र**
**न विन्देयुरन्तः सदसाव्युच्यम् ॥ ५ ॥**

ये बाह्या दशीकवो बहिः सदसो दशीकवः स्युः प्रेक्षकास्ते विब्रूयुः । इदं त्वया विनाशितमेतत् प्रायश्चित्तमिति बोध्यम् ॥ ५ ॥

**यदि तत्र न विन्देयुर्गृहपतिना व्युच्यम् ॥ ६ ॥**

यदि तत्र न विजानीयुर्विनष्टार्थमेकं प्रायश्चित्तमिति गृहपतिना व्युच्यम्।व्यातव्यमिदं विनाशितमिदमत्र प्रायश्चित्तमिति भावः ॥ ६ ॥

**गृहपतिमानुष्टुभमुक्त्वा तद्ब्रूयात् ॥ ७ ॥**

वक्तव्यकालेऽनुष्टुप्छन्दसमृचमुक्त्वाऽस्मिन्विनाशितमत्रैतत् प्रायश्चित्तम् ॥ ७ ॥

**यस्मिन्नुपह्वयत्येतावपि वा तेनैव सहाऽनुष्टुभं**
**संपादयेत् ॥ द्वयोस्तदहः समिध आहरन्ति ॥ ८ ॥**

यद्वक्तव्यमुपहताय तदनुष्टुबाख्यश्लोकेन वक्तव्यम् । तत्रोक्तप्रकारः श्लोकः—

अध्वर्यो भवता चास्मिन्विपर्यासो विधीयते ।
अग्ने नयेत्यृचा स्पष्टा हविर्धानं तु ऋग्द्वयम् ॥

अनुष्टुभमृचमुक्त्वा एतेन श्लोकेन वा प्रायश्चित्तकथनम् । प्रायश्चित्तविधायकश्लोकः—

त्वं नो अग्ने च स त्वं नो भूर्भुवः सुव(स्व)स्तथैव च ।
अनाज्ञातजपं चैव मुरारेः स्मरणं परम् ॥ इति ।

एवं प्रायश्चित्तविधानमग्ने नयेत्यादि । सन्त्यतिग्राह्यास्त्रयः । यदा गौरवीतं साम विद्यते तदाऽतिग्राह्याणां ग्रहणं दशमेऽहनि । अग्निष्टोमेऽपि यत्र गौरवीतसाम तद्बहूनतिग्राह्यान्गृह्णातीति वचनात् । उपांश्वभिषवकाले पृश्निप्राणग्रहैर्मानं पूर्वमेवोक्तम् । वायवाग्रम् । पशुकाले वारुणः पेत्वः । दक्षिणतोऽस्य उपशयानिदेशः पूर्ववत् । दक्षिणाकाले पूर्ववद्यज्ञायज्ञीये च पत्नीसंयाजान्तं कृत्वा विधिरेतदहः समिध आहरन्ति ॥ ८ ॥

**नित्या औदुम्बरीश्च ॥ ९ ॥**

समिध आहरन्तीत्यनुकर्षः ॥ ९ ॥

**अभ्यादधति नित्याः ॥ १० ॥**

आहवनीय इति शेषः ॥ १० ॥

**उत्तरेणाऽऽहवनीयमौदुम्बरीरुपसादयन्ति ॥ ११ ॥**

स्थापयन्तीत्यर्थः ॥ ११ ॥

**असूर्या उपसूर्ये याभिर्वा सूर्यः सह । ता नो हिन्वन्त्वध्वरमिह रतिरिह रन्तिरिह रमध्वमिह रन्तिरिह रमतिरिह रमध्वमिह वो रमातिः । उपसृजं धरुणमिति द्वाभ्यां गार्हपत्ये जुहोति ॥ १२ ॥**

समन्वारब्धेषु द्वाभ्यामृग्भ्यां गार्हपत्ये जुहोति ॥ १२ ॥

**अयꣳ सहस्रमानवो दृशः कवीनां मतिर्ज्योतिर्विधर्मा दध्रुः समीचीरुषसः समैरयदरेपसः समोकसः सरेतसः सचेतसः स्वरमन्युमन्तश्चिदाकोरित्यतिच्छन्दसर्चाऽऽहवनीयमुपतिष्ठन्ते ॥ ( ख० ८ ) ॥ १३ ॥**

अथाऽऽहवनीयं गत्वाऽतिच्छन्दसोपतिष्ठन्ते—अयꣳ सहस्रमानव इति प्रगीयत इति मीमांसकाः । सूत्रकारवचनं छन्दोगानामिति प्रतीयते ॥ १३ ॥

**प्राजापत्याय मनोग्रहाय संप्रसर्पन्ति ॥ १४ ॥**

ततः प्राजापत्याय मनोग्रहाय संप्रसर्पन्ति ब्रह्माध्वर्युयजमानाः ॥ १४ ॥

प्रसृप्तेष्वनया त्वा पात्रेणेति पृथिवीं मनसा ध्यायन् प्रजापतये मनवे जुष्टं गृह्णामीति प्राजापत्यं मनोग्रहं गृह्णाति । यथारूपमाकाशात् । तार्तीयसवनि-(नी)काद्वा सोमात्परिशाय(श्रप)येद्यावानेकस्मै चमसगणायाऽऽप्तः ॥ १५ ॥

प्रसृप्तेषूपांशु पात्रेण गृह्णाति, इति विधिः । अनया त्वा प्रजापतये जुष्टं गृह्णामीति । आकाशाद्यथारूपं ध्यात्वा गृह्णाति । आकाशैकदेशमथवाऽग्निष्टोमचमसोन्नयनकाले एकस्मै चमसगणाय गृह्णाति । आप्तो यावान्परिमितः ॥ १५ ॥

तस्माद्धोपांशुपात्रेण गृह्णीयाद्धोतृचमसमुख्याꣳश्चमसानुन्नयति ॥ १६ ॥ स्तुतशस्त्रे भवतः॥१७॥

गतः ॥ १६ ॥ १७ ॥

तस्य सर्वं मनसा क्रियते ॥ १८ ॥ मनसा स्तोत्रमुपाकरोति ॥ १९ ॥ मनसा प्रस्तौति ॥ २० ॥ मनसोद्गायति ॥ २१ ॥ मनसा प्रतिहरति॥२२॥ मनसा तिसृणाꣳ सार्पराज्ञीनाꣳ षट्कृत्वः प्रतिगृह्णाति ॥ २३ ॥

तस्माद्ग्रहणं वा स्तोत्रोपाकरणं प्रस्तोता उद्गाता प्रतिहर्ता च मनसा सार्पराज्ञीनाम् ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

यद्यर्धर्चशः शꣳसति नवकृत्वो यदि पच्छ ओꣳ होतरिति दशहोतुः प्रतिगरः । तथेति चतुर्होतुः । ओमिति पञ्चहोतुः । तथेति षड्ढोतुः । अरात्स्म होतरिति सप्तहोतुः ॥ २४ ॥

एवं मनसा प्रतिगरः । शंसनमनुमन्त्रणं च मनसेति बौधायनादयः ॥ २४ ॥

मनसाऽऽश्रुतप्रत्याश्रुते याज्या संप्रैषो वषट्कारो भक्षमन्त्रश्च ॥२५॥

मनसाऽऽश्रुतप्रत्याश्रुते । उक्थशा यज सोमानां सोमपक्ष उक्थशा यज सोमामिति । आकाशपक्षे मनसैव । याज्यान्ते चिह्नं वषट्कारानुवषट्कारौ । सोममाकाशं वा हरति । भक्षार्थं वक्ष्यति स्वयं सूत्रकारः ॥ २५ ॥

हुत्वा हरन्ति भक्षन्ते यत्समीक्षन्ते ससमुपहवधर्मा भवन्ति । गृहपतिं पर्युपविश्य पृच्छन्ति ॥ ( ख० ९ ) ॥ २६ ॥

श्वो भू(हु)त्वा सोममाकाशं वा हरन्ति भक्षार्थं ते भक्षयितारः समीक्षन्ते परस्परं समुपहवो मनसाऽग्रे होता ततोऽध्वर्युः स्वं स्वं चमसं चमसिनः समाख्या भक्षणं, मनसा मन्त्रमुक्त्वा सोमं प्रत्यक्षेण भक्षयन्ति । आकाशपक्षे भक्षणमन्त्रे विशेषः— भक्षेहीत्यादि प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्या१ सघ्यासं नृचक्षसं त्वा देवाकाश सुचक्षा अवख्येषं मन्द्राऽभिभूतिर्वाग्जुषाणाऽऽकाशस्य तृप्यतु इत्यादि । गणस्याऽऽकाशदेवते मतिविदः, इत्येवं भक्षणम् । विनिविश्य गृहपतिं ब्रह्मकथा वक्तव्याः—इदं वा अग्रे नैव किंचनाऽऽसीदित्येवमाद्याः ॥ २६ ॥

यद्दशहोतारः सत्रमासत । केन ते गृहपतिनाऽऽर्ध्नुवन् । केन प्रजा असृजन्तेत्यध्वर्युः पृच्छति ॥२७॥

अथवा गृहपतिमवेक्ष्य महार्त्विजः पर्युपविशन्ति समन्ततः पृच्छेयुः । ब्रह्म वै चतुर्होतारः ( तै० ब्रा० २–१२–४ ) इति चतुर्होतॄणां ब्रह्मत्वात्तमध्वर्युः प्रथमं पृच्छति यद्दशहोतारः सत्रमासतेति ॥ २७ ॥

प्रजापतिना वै ते गृहपतिनाऽऽर्ध्नुवन्तेन प्रजा असृजन्तेति गृहपतिः प्रत्याह ॥ २८ ॥

प्रतिवचनम् ॥ २८ ॥

यच्चतुर्होतारः सत्रमासत केन ते गृहपतिनाऽऽर्ध्नुवन्केनौषधीरसृजन्तेति ब्रह्मा पृच्छति । सोमेन वै ते गृहपतिनाऽऽर्ध्नुवन्तेनौषधीरसृजन्तेति गृहपतिः प्रत्याह ॥ २९ ॥ यत्पञ्चहोतारः सत्रमासत केन ते गृहपतिनाऽऽर्ध्नुवन्केनैभ्यो लोकेभ्योऽसुरान्प्राणुदन्त । केनैषां पशूनवृञ्जतेति होता पृच्छति । अग्निना वै ते गृहपतिनाऽऽर्ध्नुवन्तेनैभ्यो लोकेभ्योऽसुरान्प्राणुदन्त तेनैषां पशूनवृञ्जतेति गृहपतिः प्रत्याह ॥३० ॥ यत्षड्ढोतारः सत्रमासत केन ते गृहपतिनाऽऽर्ध्नुवन्केनर्तूनकल्पयन्तेति होतृकाः पृच्छन्ति । धात्रा वै ते गृहपतिनाऽऽर्ध्नुवन्तेनर्तूनकल्पयन्तेति गृहपतिः प्रत्याह ॥ ३१ ॥ यत्सप्तहोतारः सत्रमासत केन ते गृहपतिनाऽऽर्ध्नुवन्केन सुवरायन्केनेमाँल्लोकान्समतन्वन्नित्युद्गाता पृच्छति । अर्यम्णा ते गृहपति-

ना ऽऽध्व्रुवन्तेन सुवरायन्तेनेमाँल्लोकान्समतन्वन्नि-
ति गृहपतिः प्रत्याह ॥ ३२ ॥

सर्वत्र प्रतिवचनं गृहपतेरेव । अहीनभूतेऽप्येवम् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

प्रजापतिं परिवदन्ति । ३३ ॥

प्रजापतिं परिवदन्तीति विज्ञायते ( २१-११-१३ ) इत्यापस्तम्बसूत्रम् ॥३३॥

अकुशलोऽयं प्रजापतिर्यो दꣳशमशकान्सꣳसृजेद्यः
स्तेनानिति ॥ ३४ ॥

प्रजापतिपरिवादाः प्रजापतेराराधनार्थं मुक्त्यर्थमित्यर्थः ॥ ३४ ॥

अपि वा प्रजापतिपरिवादानां मन्त्रानधीयते—यद-
रण्यानि प्रजापतिः पुरश्च ससृजे गिरीन् । कर्ताऽ-
ग्निश्च तद्भद्रं यद्भद्रं तन्म आ सुव ॥ यदूषा तम-
सा युक्त्वा दिने तेऽक्षिणघ्रमातपत् । अम्भश्चात्य-
तिघर्मश्च तथा तत्ते प्रजापतिः ( तेः ) ॥ यत्स्ते-
नान्यदूत्कान्दꣳशान्मशकान्यदध्याश(य)वः । तदु
ते वृजिनं तेषां तद्विषं तेन तेऽमृतम् ॥ प्रजापतिं दश-
ममहर्भजध्वं मतिं कवीनामृषभं जनानाम् । सुघु-
क्षितिꣳ सुद्रविणं दधानो विपाप्मा लोके निदधा-
ति देवयुमित्येतैः परिवदेयुः ॥ ३५ ॥

अत्र श्रुतिः—प्रजापतिं परिवदन्त्याप्त्यैवैनं तद्व्याचक्षते, इति फलार्थवादः, इति मीमांसकाः । अपि वा प्रजापतिपरिवादानां मन्त्रान्पठन्ति केचिच्छाखिनस्ते ते प्रत्येतव्याः ॥ ३५ ॥

अथ वरं वृण(णु)ते ॥ ३६ ॥

प्रजापतिपरिवादानन्तरं वरं वृण(णु)ते यजमानः ॥ ३६ ॥

अदो नोऽस्त्विति यत्कामा भवन्ति
॥ (ख० १०) ॥ ३७ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे षोडशप्रश्ने चतुर्थः पटलः ।

यत्कामयते तस्य नाम गृह्णातीति भरद्वाजः । 'उत वै ब्राह्मणोऽनेककामो भवति' ( २१-१२-४ ) इत्यापस्तम्बः । यत्कामयते तदुच्चारयतीत्यर्थः ॥ ३७ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां
प्रयोगचन्द्रिकायां षोडशप्रश्ने चतुर्थः पटलः ।

अथ षोडशप्रश्ने पञ्चमः पटलः ।

अपि वा यदेवैतद्भूर्भुवः सुवः सुप्रजाः प्रजया भूयासꣳ सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैरिति तेन चैषाꣳ सर्वे कामा अवरुद्धा भवन्ति ॥ १ ॥

प्रजापतिकामनार्थोऽयं मन्त्रः । यदि कामा न विद्यन्ते तदाऽवरुद्धावरणनिवृत्तिः ॥ १ ॥

( चतुर्होतॄन्व्याख्याय द्वारौ संवृत्य ) यथाधिष्णियं पत्नीर्व्यासाद्य द्वारौ संवृत्याथैभ्यो वाचमुपाकरोति ॥ २ ॥

चतुर्होतॄन्व्याख्याय यजमानार्थेये ( दयः ) सर्वे द्वारौ संवृत्य यथाधिष्णियं व्यवस्थिता उदगपवर्गास्तथा पत्नय आसते । अथैभ्यो वाचं मृत्पात्रमध्वर्युर्वा ॥ २ ॥

इह धृतिरिह विधृतिरिह रन्तिरिह रमतिरित्यौदुम्बरीं परिष्वजन्त उदरैरिवोपस्पृशन्तः समन्वारभ्यौदुम्बरीमासते युवं तमिन्द्रा पर्वता पुरोयुधा यो नः पृतन्यादपतन्तमिद्धन्तं( द्धतं ) वज्रेण तं तमिद्धन्तम् । दूरे च तां यच्छत्सद्वहनं यदि नक्षदस्माकꣳ शत्रून्परि शूर विश्वतो दर्मादर्षिष्ठ विश्वत इति समन्वारब्धा सर्वानुत्तरस्य हविर्धानस्य दक्षिणैः पाणिभिः कटाꣳस्तेजनीभिर्वा तिष्ठमाना अतियन्ति ॥ प्राञ्च ईषद्गत्वा वागैतु वाग्वागैतु वागुपैतु वाक्समैतूपमैतु वाग्भूर्भुवः सुवरिति पञ्च वचाꣳसि व्याहरन्ति ॥ ३ ॥

इह धृतिरित्यनेन मन्त्रेणौदुम्बरीं परिष्वज्य समन्वारभ्य यजमाना वाग्यतास्तिष्ठन्ति । यथोदरैरुपस्पर्शनं भविष्यति तथा कर्तव्यम् । अहीनेऽप्येका । तथैकैकस्य पत्नी वाग्यतातिष्ठति । न सर्वाः । अधिवृक्षसूर्ये प्राञ्चः परस्परं समन्वारब्धाः सर्पन्ति । अहीनेऽप्येक एव युवं तमिन्द्रा पर्वतेति प्रयोगमन्त्रः सर्वेषामुत्तरेण हविर्धानं गच्छन्ति । प्राङ्मुखा दक्षिणहस्तैकः कटाꣳस्तेजनीभिरवलम्बमानाः प्राञ्चो गत्वाऽऽहवनीयस्योत्तरे पञ्च वचांसि व्याहरन्ति । वागैत्वित्यादि ॥ ३ ॥

१ ख. ग. रम इह रमतामित्यौ° ।

**अधिवृक्षसूर्ये सुब्रह्मण्यया वाचं विसृजन्ते ॥ ४॥**

अधिवृक्षसूर्ये वर्तमान एवं चरद्भिः क्रियते सुब्रह्मण्यान्तं वाग्विसर्गः ॥ ४ ॥

**औदुम्बरीः समिध अभ्यादधाति ॥ ५ ॥**

पूर्वमेवौदुम्बरीसमिधः परिष्वञ्जनं कृतवाग्यमनस्येह वाग्विसर्गः सर्वेषामौदुम्बरीः समिधः पूर्वमेवोपसादिता आहवनीये यजमानाः । अथ दशमेऽहनि यज्ञायज्ञीयकाले वसतीवर्यादि, अहीनसंततयः परिस्तरणान्तम् ॥ ५ ॥

**श्वोभूत उदयनीयः स व्याख्यातरूपः ॥ ६ ॥**

गतार्थः ॥ ६ ॥

**प्रायणीय उदयनीयो नात्राहीनसंतयो विद्यन्ते ॥ ७ ॥**

श्वोभूते महारात्रे बुद्ध्वा प्रायणीयवदुदयनीयमुपयन्ति । उभौ षोडशीमन्तौ द्वादशाहस्य षोडशीमतिरात्रे इति कल्पान्तरवचनात् । अग्ने नयेत्यादि समं सर्वमुपावहरति । अग्निं युनज्मि अत्रोपांश्वभिषवकाले पृश्निप्राणग्रहैर्मानं पूर्वमेवोक्तम् । प्रायणीयोदयनीयोर्दशमेऽहनि इति त्रयः कल्पाः सूत्रकारेणोक्ताः । त्रिष्वहःसु यथासंख्यमिति केचित् । सर्वत्र विकल्पा इत्यपरे । पशुकाल आग्नेयः । ऐकादशिनेऽग्निष्ठ उपाकरोति ऐन्द्राग्नो वा । न खण्डः सूर्याय ब्रह्मवर्चसकामस्योपशयनिर्देशः । कृष्णमृगस्ते पशुरित्यह रहर्यूपमानपक्षे अग्नीषोमीयकाल एकं मिनोति । तत्तु प्रायणीये मानम् । तस्मिन्नेव मिमीते । आग्नेयमुपाकरोति तस्य दक्षिणत उपशयनिर्देशश्च । श्वोभूते सारस्वतमुपाकरोति इत्यादि द्वितीयेऽह्नि मिनोति । पश्वर्थत्वाद्यूपस्य पशुक्रमः प्रधानत्वाद्दक्षिणतोऽपवर्गता यूपानां नोदगपवर्गता । सारस्वतस्य यूपस्य, दक्षिणत उपशयः स्थाप्यते सारस्वतमुपाकृत्योपशयनिर्देशः । एवमहन्यहन्युत्तरोत्तरः पशुः । यूपैकादशिन्यां पूर्ववत् ॥७॥

**पूर्वस्मिन्नहन्युत्तरस्मा अह्ने यज्ञायज्ञीयं प्राति वसतीवरीर्गृह्णाति ॥ ८ ॥**

दक्षिणाकाले यज्ञायज्ञीयं काले वर्तमाने वसतीवरीः ॥ ८ ॥

**एता अहीनसंततयो भवन्ति ॥ ९ ॥**

नात्राहीनसंततयः ( स०श्रौ० ३६–५–७ ) इति वचनान्न्यायप्राप्तमेतत् । नमस्ते अस्त्विति भवत्येव ॥ ९ ॥

**उतो तान्येव दीक्षितवसनानि परिधाय प्रचरेयुः ॥ १० ॥**

कृष्णाविषाणं प्रविध्यन्ति । षोडशीहोमे कृते रात्रिपर्यायैः प्रचर्य श्वोभूते तिरोअह्नियान्तमत्र सख्य ( वाग् ) विसर्गः । एकादश समिष्टयजूंषि । अथ यज्ञपुच्छप्रभृति सर्वमग्निष्टोमवत् ॥ १० ॥

**वपनकाले सशिखानि सत्रभूते वापयन्ते ॥ ११ ॥**

अनूबन्ध्यायां वपायां हुतायां वपनकाले सशिखानि शिरांसि वपन्ते मुण्डानीत्यर्थः । शिखामनुप्रवपन्ते ( तै॰ सं॰ ७–२– ) इति श्रुतेः । अहीने तु शिखावर्जम् । ततः पात्नीवतं कर्म ततोऽग्नेर्विमोकादि ॥ ११ ॥

**उदवसानीयेष्वन्यानृत्विजो वृत्वा तान्वा ज्योतिष्टोमेनाग्निष्टोमेन पृष्ठशमनीयेन सहस्रदक्षिणेन सर्ववेदसदक्षिणेन वा नाना यजेरन् ॥ १२ ॥**

उदवसानीयान्तमग्निष्टोमवत् । सक्तुहोमो गृहपतेरेव शिष्टं सर्वं ( पूर्ववत् ) । सर्वेषामुदवसानीयेनेष्ट्वा, एकैको यजमानोऽन्यान्षोडशर्त्विजो वृत्वा पृथक्पृष्ठशमनीयैर्यजेरन् । केचित्—पृष्ठशमनीयस्य सर्वनियमं नेच्छन्ति ( अनन्तरे पर्वणि ) पृष्ठशमनीयेन यक्ष्य इति संकल्पः । सहस्रदक्षिणा । तत्र नियतोभयत्र त्रैधातवीया । केचिन्नेच्छन्ति । अनन्तरे पर्वणि सौत्रामणी मैत्रावरुणी वा । एवं सत्रात्मकस्य क्लृप्तिः समाप्ता ॥ १२ ॥

**संतिष्ठते द्वादशाहः ॥ (ख॰ ११) ॥ १३ ॥**

गतः । त्रैधातवीया ह्युभयत्र चेष्टा । केचित्तु नेच्छन्ति मनीषिणस्तत् । सौत्रामणी स्यात्तु तथा वयस्या संतिष्ठते तत्र समूढसत्रम् ॥ १३ ॥

अथ गवामयनस्य कर्मोच्यते—

**गवामयनेन प्रजापतिं भूमानं गच्छन्त्येषु लोकेषु प्रतितिष्ठन्ति ॥ १४ ॥**

भूमानं स्थानम् ॥ १४ ॥

**तस्य द्वादशाहेन सत्रभूतेन कल्पो व्याख्यातः ॥ १५ ॥**

॥ १५ ॥

तस्य द्वादशाहस्य गुणविशेषमवलोक्य पक्षान्तरमाह—

**चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेरन् ॥ १६ ॥**

माघपौर्णमास्याः पुरस्ताच्चतुरहे शुक्लैकादश्यां दीक्षेरन् । तथा सति माघकृष्णसप्तम्यां द्वादशदीक्षाणां समाप्तत्वात्तदनन्तरवर्तिन्यामेकाष्टकायां सोमक्रयः संपद्यते । ननु—'चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेरंस्तेषामेकाष्टकायां क्रयः संपद्यते । ( तै॰ सं॰ ७–४–९ ) इति गवामयने श्रूयते । पौर्णमास्याः पूर्वस्मिंश्चतुरहे दीक्षेरन्नेकादश्यां दीक्षामारभेत । तथा सति पौर्णमास्या उपरितने सप्तमे दिने द्वादश दीक्षाः पर्यन्ते । तत उपरितन्यामष्टम्यां सोमक्रय इत्यर्थः । तत्र विशेषस्यादृष्टत्वाद्या काचित्पूर्णिमेत्येकः

पक्षः । 'चित्रापूर्णमासे दीक्षेरन्मुखं वा एतत्संवत्सरस्य यच्चित्रापूर्णमासः,' (७–४–९) इति प्रशस्यमानतया चैत्री पौर्णमासीति द्वितीयः पक्षः । याज्ञिकसमाख्यया माघकृष्णाष्टम्येकाष्टका । तत्र सोमक्रयसंपत्तये माघ्याः पौर्णमास्याः पूर्वस्यामेकादश्यां दीक्षाऽऽरब्धव्या ॥

चतुर्विंशतिपरमा इष्टप्रथमयज्ञा एकाष्टकायां प्रातरग्निहोत्रं हुत्वा विज्ञानमुपयन्ति, ( अह्नां विधान्यामेकाष्टकायाम् (तै० सं० ३–३–८) इत्यादीनामह्नां विधान्यामेकाष्टकायां सा संवत्सरसत्रस्याह्नां विधात्री तस्यां दीक्षा । एकाष्टकायां प्रातःकाले चतुःशरावपरिमितेन पिष्टेन निर्मितमपूपं पक्त्वाऽपूपमादायोल्मुकं चाऽऽदाय कक्षेऽपूपं निधायोल्मुकेन कक्षं दहेत् । यदि दहति पुण्यसमं भवति निरुपद्रवः संवत्सरं भवति । यदि न दहति पापसममक्षादिभिः पीडाकरो भवति । एवं विज्ञानमुपयन्ति । ) एवं विज्ञानं कृत्वा गवामयनस्याऽऽरम्भः । साग्निचित्यो गवामयनो नाचिकेतयुक्तो वा यत्र वा भूयिष्ठा आहुतयो हूयेरन्, इति । अस्मिन् गवामयने न भूयिष्ठा ग्रहा गृह्यन्त इति वचनात् । नाचिकेतपक्षेऽपि तस्यामेव दीक्षा । एकाष्टकायां दीक्षेरन्नित्यापस्तम्बोऽप्याह ।

अस्यामेकाष्टकायां विज्ञानं कृत्वा गवामयनेन साग्निचित्येन यक्ष्यामहे स्वर्गार्थमिति संकल्पः । प्राजापत्यादयो वा फलं सर्वकामार्थो वाऽऽश्वलायनमतात् । 'अथ गवामयनं सर्वकाम इति । सर्वं सत्रभूतद्वादशाहवत् । अस्मिन् (पक्षे) उखासंभरणं पर्वणि पशुबन्धो (वायव्यः) पञ्च पशवो वा ॥ १६ ॥

**माघ्याश्चैत्र्या वा ॥ १७ ॥**

चैत्र्याः पौर्णमास्याः पूर्वस्यामेकादश्यामग्निवद्दीक्षणीया । एवं द्वादश दीक्षाः ॥ १७ ॥

आगामिन्यामष्टम्यां प्रायणीया तत्राऽऽह—

**प्रायणीयोऽतिरात्रश्चतुर्विंश उक्थ्य आरम्भणीयस्त्रिवृद्धा ते शये द्वे अहनी भवतः । ज्योतिरग्निष्टोमो रथंतरसामा गौरुक्थ्यो बृहत्सामा आयुरुक्थ्यो रथंतरसामा गौरुक्थ्यो बृहत्सामाऽऽयुरुक्थ्यो रथंतरसामा ज्योतिरग्निष्टोमो बृहत्सामेति ॥ १८ ॥**

अष्टम्यां प्रायणीयया प्रचर्य सोमक्रयादि । चैत्रपक्षमाश्रित्य प्रयोगः— आगामिन्यां चतुर्थ्यामग्नीषोमीयः । तस्मिन्नेकादश यूपान्मिन्वन्ति रात्रौ परिस्तरणान्तं श्वोभूते महारात्रे बुद्ध्वाऽग्ने नयेत्यादि द्वादशाहवत् । प्रायणीयमतिरात्रमुपयन्ति । अत्रापि पृश्निप्राणग्रहादयो नामधेयात्केचिन्नेच्छन्ति । ऐन्द्रवायवाग्रः । पशुकाल ऐकादशिनानां विकृतीनामेक आग्नेयो वा ।

श्वोभूते तिरोह्नियान्तं द्वादशाहवत्संततयः । द्वादशाहस्य द्वितीयवत् चतुर्विंशातिमुक्थ्यमारम्भणीय एवास्तीर्यानतिग्राह्यः शुक्राग्रः । पशुकाले सारस्वतीं मेषीम् । पत्नीसंयाजान्तम् । एतस्मिन्नहनि शय(सत्र) संज्ञके पूर्ववदहीनसंततयः ॥ १८ ॥

**अभिप्लवः षडहः ॥ १९ ॥**

उपयन्तीति शेषः ॥ १९ ॥

**एवं विहिताश्चत्वारोऽभिप्लवाः ॥ २० ॥**

तेषामभिप्लवानां ज्योतिष्टोमोऽग्निष्टोमं रथंतरसामानमुपयन्ति । आग्रयणाग्रः । पशुकाले बभ्रुः सौम्यः । एवं त्र्यनीका परिवर्ततेऽविषुवतः ॥ १ ॥ गौरुक्थ्यो बृहत्पृष्ठः । न त्वतिग्राह्याः । पशुकाले पौष्णः श्यामः ॥ २ ॥ आयुषमुक्थ्यं रथंतरसामानं न त्वतिग्राह्याः । पशुकाले शितिपृष्ठो बार्हस्पत्यः ॥ ३ ॥ गौरुक्थ्यो बृहत्पृष्ठः । पशुकाले शिल्पो वैश्वदेवः ॥ ४ ॥ अथाऽऽयुरुक्थ्यः पशुकाल ऐन्द्रोऽरुणः ॥ ५ ॥ अथ ज्योतिष्टोममग्निष्टोमं बृहत्सामानमुपयन्ति । पशुकाले मारुतः कल्माषः ॥ ६ ॥ एतानि पत्नीसंयाजान्तानि । एवंप्रकारांश्चतुरोऽभिप्लवानुपयन्ति । ऐकादशिनं शिष्टाः ॥ २० ॥

**पृष्ठ्यः षडहः समासः ॥ २१ ॥**

ऐकादशिनानाम् ॥ २१ ॥

**सद्वितीयः सतृतीयः सचतुर्थः सपञ्चमः संभार्यः षष्ठः ॥ २२ ॥**

एवं विहितान्पञ्च मासानुपयन्ति । ततः संभार्य इत्यापस्तम्बः ॥ २२ ॥

**त्रयोऽभिप्लवाः ॥ २३ ॥**

आभिप्लव ऐकादशिनानां द्वादशाहवदावृत्तिः ॥ २३ ॥

**पृष्ठ्यः षडहः ॥ २४ ॥**

द्वादशाह उच्यत इति शेषः । उत्तरत्र्याहे पूर्वत्र्याहे वाऽतिग्राह्या आग्नेयाद्याः । एवम(वं)संपत्ति(त्र)पृष्ठ्यषडहान्ते मध्वशनादयः ॥ २४ ॥

**अभिजित्त्रयः स्वरसामान उक्थ्या अग्निष्टोमा वा ॥ २५ ॥**

एवं विहितान्पञ्च मासानुपयन्ति । ततोऽनन्तरमस्य संभार्यं पृष्ठ्यं मासमुपयन्ति । त्रीनभिप्लवानथ पृष्ठ्यषडहमभिजितमग्निष्टोमं त्रीन्साम्नोक्थ्यानग्निष्टोमान्वा ॥ २५ ॥

**परे द्वे शये अहनी ॥ २६ ॥**

परे द्वे शये अहनी इति । अतिरात्रश्चतुर्षु अंशेषु पूर्व एव प्रयुज्यते ॥ २६ ॥

**इति षण्मासाः ॥ २७ ॥**

षण्मासा गण्यन्ते । अत्र गणनामात्रमेवं षण्मासाः परःसामसूक्थ्यानग्निष्टोमाविनिवेशनवाहकारिण एकविंशत्यह इति च्छन्दोगविशेषः । नवाहकारिणोऽग्निष्टोमा एकविं-

शत्यहकारिणीरुक्थ्याः । परःसामसु पुनश्च विशेषः—अतिग्राह्येषु प्रथमेऽहनि उपयामगृहीतोऽस्यौषधीभ्यो जुष्टं गृह्णामीति एकमेवाऽऽग्नेयविकारः । ओषधयः पार्थिव इति एष ते योनिरद्भ्यस्त्वौषधीभ्य आप ओषधयस्तेजोऽसीत्येवं यूयं देवेषु भूयास्तेजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरुत दीक्षायै च त्वेत्यादि । तेजोविदसीति प्रकृतिवत् । मयि मेधां मयि प्रजां मय्याप ओषधयस्तेजो दधात्विति भक्षणम् । द्वितीये परःसामनि ओषधीभ्यस्त्वा प्रजाभ्यो गृह्णामीति । ता अप्याग्नेयाविकाराः । एष ते योनिरोषधीभ्यस्त्वा प्रजाभ्य ओषधयः प्रजास्तेजस्विन्य अयं देवेष्वित्यादि मनुष्येषु कुरुत दीक्षायै च त्वेत्यादि पूर्ववदनुमन्त्रणं च । मयि मेधां मयि प्रजां मय्योषधयः प्रजास्तेजो दधत्विति भक्षणम् । तृतीये परःसामनि प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णाम्येष ते योनिः प्रजाभ्यस्त्वा प्रजापतय इत्याग्नेयविकार एक एव । प्रजापते तेजस्विन्यस्तेजस्विन्यो यूयं देवेषु भूयास्त मनुष्येषु कुरुत दीक्षायै च त्वेत्यादि पूर्ववदनुमन्त्रणं च । मयि मेधां मयि प्रजां प्रजापतिस्तेजो दधात्विति भक्षणम् । अन्ते अहीनसंततयः ॥ २७ ॥

**मध्ये विषूवानेकविꣳशोऽग्निष्टोमो महादिवाकीर्त्यः ॥ २८ ॥**

ततो विषुवन्तमुपयन्ति । एकविꣳशमग्निष्टोमं दिवाकीर्त्यसामानम् । अग्ने नयेत्यादिसौमिकपात्रप्रयोगकालेऽष्टावतिग्राह्यपात्राणि प्रयुनक्ति ॥ २८ ॥

**आदित्यव्रतं वा ( सामानम् ) ॥ २९ ॥**

उपयन्तीत्यर्थः ॥ २९ ॥

**सामोदित आदित्ये प्रातरनुवाकमुपाकरोति ॥ ३० ॥**

गतः ॥ ३० ॥

**दिवाकीर्त्यमेतदहर्भवति ॥ ३१ ॥ आवृत्त उत्तरः पक्षस्त्र्यः स्वरसामानः ॥ ३२ ॥**

पूर्वपदार्थानां पूर्वमेवानुष्ठानमिति न्यायात् । अग्ने नयेत्यादित एवेति शुक्राग्रं गृह्णाति । यदि जगत्सामा विषुवान्दिवाकीर्त्यसामेत्यर्थः । तदाऽऽग्रयणाग्रः, अतिग्राह्यकाल ऊर्ध्वानावृत्तांश्च गृह्णाति । तत्रैवं प्रयोगः—उपयामगृहीतोऽस्यद्भ्यस्त्वौषधीभ्यो जुष्टं गृह्णामीति । उपयामगृहीतोऽस्यौषधीभ्यस्त्वा प्रजाभ्यो गृह्णामीति । उपयामगृहीतोऽसि प्रजाभ्यस्त्वा प्रजापतये गृह्णामीति ऊर्ध्वान्गृहीत्वा सौर्यं गृह्णाति—उदु त्यमित्यृचमुक्त्वा, उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वत इत्येवं सादनम् । तत आवृत्तान्गृह्णाति । उपयाम० प्रजाभ्यस्त्वा० उपयाम० ओषधीभ्यस्त्वा० प्रजाभ्यस्त्वा प्रजाभ्यः । उपयाम० अद्भ्यस्त्वौषधीभ्य इत्यादि पूर्ववत् । गृह्णामीत्यादयः(दिभिः) सादनं च । ततो वैश्वकर्माणं गृह्णाति—वाचस्पतिं विश्वकर्माणमित्यृचमुक्त्वोपयाम० विश्वकर्मणे त्वा० ओजस्वते

जुष्टं गृह्णामीति ऐन्द्रवदेष ते योनिर्विश्वकर्मणे त्वौजस्वते० । पशुकाले शितिपृष्ठं बार्हस्पत्यमुपाकरोति । ततः सौ(सू)र्यमुपालम्भं करोति सूर्याय त्वा जुष्टमुपाकरोमीति सौर्यं विषुवत्युपालम्भ्यमुपाकरोतीति वचनात् । द्विवचनेनोहः सर्वत्र । अतिग्राह्यकाल ऊर्ध्वान् पूर्ववदुक्त्वाऽनुमन्त्रणं कृत्वा (ततः) सौर्यं प्रतिवर्तत आवृत्तात्ततो वैश्वकर्माणं विश्वकर्मन्नोजस्विन्नोजस्वि(स्वी) त्वं देवेषु भूया इति । ऐन्द्रवदोजोविदसि मयि मेधां मयि प्रजां मयि विश्वकर्मेन्द्रियं दधातु । एवं पत्नीसंयाजान्तमहः संतिष्ठते । अहीनसंततयः ।

त्रीनर्वाक्स(सो)मान् , उपयाम० उक्थ्यानग्निष्टोमान्वा प्रथमेऽहन्यतिग्राह्यकाल उपयाम० प्रजाभ्यस्त्वा प्रजापतय इत्येकः । एवं द्वितीयेऽहनि उपयाम० अद्भ्यस्त्वौषधीभ्य इत्यर्वाक्सोमयुक्तेषु प्रथम आग्रयणाग्रः । द्वितीयः शुक्राग्रः । तृतीय ऐन्द्रवायवाग्रः । तेष्वहीनसंततयः ॥ ३१ ॥ ३२ ॥

विश्वजित् ॥ ३३ ॥

अग्निष्टोममुपयन्तीत्यापस्तम्बः । ऐन्द्रवायवाग्रः, आवृत्त्यभावात् । आदित्यग्रहगृह्यकाले—आदित्यमेकमेव गृह्णाति । अदितिदेवत्यः । विश्वजित्सर्वपृष्ठोऽपि एकमेवाऽऽदित्यमुद्गृह्णाति । महीमू षु मातरमित्युक्त्वा, उपयाम० आदित्यै(त्याय) त्वोजस्विन एष ते योनिरदित्यै त्वौजस्विन्यै अदित्य(आदित्य) ओजस्विन्नोजस्वी त्वं देवेषु नाऽऽधैन्द्रवत् । मयि मेधां मयि प्रजां मय्यायुरिति, इन्द्रियं दधातु पत्नीसंयाजान्तमहीनसंततयः ॥ ३३ ॥

चत्वारि शयानि । त्रयस्त्रिंशारम्भणः पृष्ठ्यः षडहः ॥ ३४ ॥

तानि चत्वारि शयान्यहानि सप्तमे मासि गोसवम् । अथाऽऽवृत्तं पृष्ठ्यषडहमुपयन्ति । त्रयस्त्रिंशारम्भणमाग्रयणाग्रः । अस्मिन्नहनि वैश्वकर्माणमतिग्राह्यमेव गृह्णाति विश्वजित्प्रभृत्यादित्यवैश्वकर्मणोर्विपर्यासेनैकस्मिन्नादित्य एकस्मिन्वैश्वकर्मण एवं व्यत्यासेन महाव्रताद्गृह्णाति एकैकमेव नतु षडहं प्रयुनक्ति । अथ द्वितन्त्रमेवं शुक्राग्रमथैकविंशषोडशी गृह्यते । ऐन्द्रवायवाग्रमथ सप्तदशमाग्रयणाग्रमथ पञ्चदशशुक्राग्रमथ त्रिवृत्तमैन्द्रवायवाग्रमेवं षडह आवृत्तः । आवृत्तेष्वेकमनीका उत्तरेषु षडहान्ते मध्वशनादयः ॥ ३४ ॥

चत्वारोऽभिप्लवाः प्रत्यञ्चः स मासः ॥ ३५ ॥

त्रयस्त्रिंशान्त एवमावृत्तः पृष्ठ्याहः षडहमुपेत्य चत्वारोऽभिप्लवाश्च स मासः संपद्यते । स एको मासः ॥ ३६ ॥

सद्वितीयः सतृतीयः सचतुर्थः सपञ्चमः ॥ ३६ ॥

एवं विहितानुपयन्ति ॥ ३६ ॥

संभार्य उत्तमो द्वावभिप्लवौ ॥ ३७ ॥

ततः संभार्यः । विषममासे द्वावभिप्लवौ, एवमन्ताऽऽवृत्ता त्र्यनीका अर्वाक्साम-प्रभृति विश्वजिद्वर्जं विश्वजिदैन्द्रवायवाग्रः । गतमन्यत् ॥ ३७ ॥

गौश्चाऽऽयुश्च द्वे अहनी ॥ ३८ ॥

गवायुषी । गोशुक्राग्रः । आयुराग्रयणाग्रः । अथवा पृष्ठ्याहः षडह उक्थ्य-मैन्द्रवायवाग्रः । शुक्राग्रे रथंतरपृष्ठ इति विश्वकर्म च गोआ(गवा)युषि(षी) प्रयुज्या-म्रता वा ॥ ३८ ॥

द्वादशाहस्य द्वादशाहानि ॥ ३९ ॥

द्वादशाहान्यूर्ध्वानि ॥ ३९ ॥

महाव्रतमुदयनीयश्चातिरात्र इति ॥ (ख० १२) ॥ ४० ॥

इति सत्याषाढहिरण्यकेशिसूत्रे षोडशप्रश्ने पञ्चमः पटलः ।

समूढवन्महाव्रतोदयनीयौ शये चतुर्भिरहोभिः सह मासः । द्वादशाहस्य प्रथम ऐन्द्रवायवाग्रो द्वितियः शुक्राग्रस्तृतीय आग्रयणाग्रः । एवं परिवर्तते । दशम ऐन्द्रवा-यवाग्रो द्वादशाहाहीनस्य दशरात्रस्य यः सप्तदश उक्थ्यस्य द्वात्रिंशदेकादशिन्यः परि-समाप्ताः । नवान्यहान्यतिरिच्यन्ते । तेष्वतिरिक्ताः पशव आलभ्यन्ते । गव्यं वैष्णवं वामनमेकविंशगोपशुरैन्द्राग्नम् । तृणवे वैश्वदेवं त्रयस्त्रिंश्शत् द्यावापृथिवी( भ्यां )धेनुम् । तस्या एव वत्सं वा छन्दोगमतिः, गोपशुरादितिदेवत्यो मैत्रावरुणस्यापिवैन्द्रवायवाग्रः । प्राजापत्यमृषभं तूपरं महाव्रते शुक्राग्रः । आग्नेयमृषभमुदयनीयेऽतिरात्र आग्रय-णाग्रः ॥ ४० ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां
प्रयोगचन्द्रिकायां षोडशप्रश्ने पञ्चमः पटलः ॥

अथ षोडशप्रश्ने षष्ठः पटलः ॥

द्वादशमासाः शाठ्यायनकम् ॥ १ ॥

अथ वाक्ये कृते श्वोभूते महारात्रे बुद्ध्वा महाव्रतमुपयन्तीत्यर्थः । प्रजापतेराराध-नार्थं महाव्रतम् । अग्ने नयेत्यादिसौमिकपात्रप्रयोगः । सप्तत्रिंशदतिग्राह्यपात्राणि प्रयु-

नक्ति । उशा( दशाऽऽ )ग्नेयानिति द्वयेन दशैन्द्रानरी( नि )ति द्वयेन वैश्वकर्मणादित्यौ चैन्द्रस्थान इति द्वयेन ततः पञ्च रा( पा )त्राणि प्रवदन्ति। प्रतिदिशमेकैकं मध्य एकम् । ततो दश सौर्यानिति द्वयेनैवं सप्तत्रिंशमु( दु )पकर्त्रग्रमेतदहः प्रकृतिवदाग्नेयान्दश गृह्णाति । प्रकृतिवत्सादनमिति द्वयेन दशैन्द्रान् गृह्णाति । प्रकृतिवत्सादनं वैश्वकर्मणादित्यौ समुच्चयेन तावुभौ सह महाव्रते गृह्येते इति श्रुतेः । पञ्च पात्राण्यैन्द्रस्थाने सादितानि प्रतिदिशमेकैकमेकं मध्ये । तस्मात्सप्तदशैन्द्राणि भवन्ति । वैश्वकर्मणादित्यौ गृहीत्वा पञ्चपात्रेषु गृ( ग्र )हणं पूर्वार्धे पात्रम्—इन्द्रमिद्गाथिनो बृहदिति पुरोवाचमुक्त्वा—उपयामगृहीतोऽसीन्द्राय त्वाऽऽदित्यवते जुष्टं गृह्णामीति गृहीत्वा एष ते योनिरिन्द्राय त्वाऽऽदित्यवत इति सादनमेवं सर्वत्र ग्रहणं सादनेषु पञ्चस्वपि, इन्द्राय त्वोक्था युव इति । अभि त्वा शूर नोनुम इति दक्षिणार्धस्य पुरोरुगिति पश्चार्धस्य त्वामिद्धि हवामह इति ।

उत्तरार्धस्य तदिदास भुवनेषु ज्येष्ठमिति मध्यमभूतस्य । एवं सादितान् पञ्चाप्यन्यस्मिन् पात्रे सवनीयं क्षिप्त्वा सर्वमध्यमे पात्रे गृह्णाति त्वे क्रतुमापि वृञ्जन्ति विश्वेत्युक्त्वा उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिः प्रजापतये त्वेति सादनमथ सौर्यं दश गृह्णाति इति द्वयेन विरमति ॥ १ ॥

**उभयतः संभार्य उत्तरः पक्षस्ताण्डकम् ॥ २ ॥**

सारस्वत्यादि । अथैकेषामुत्तरपक्षे विकल्पः ॥ २ ॥

उपरिष्टाद्विश्वजितः । पृष्ठ्यः षडहस्त्रयोऽभिप्लवा इति द्यू( द्व्यू )नो मास उत्तमे संभार्ये चत्वारोऽभिप्लवा गौश्चाऽऽयुश्च द्वे अहनी द्वादशाहस्य दशाहानि महाव्रतोदयनीभ्यां द्यू( द्व्यू )नो मासः पूर्यते । अथ ह भाल्लविके पूर्वस्मिन्पक्षे पुरस्तात्प्रथमात्पृष्ठ्यादभिजिदग्निष्टोमः । उत्तरस्मिन्पक्ष उपरिष्टादुत्तमात्पृष्ठ्याद्विश्वजितः पृष्ठ्यः षडह आयुरुक्थ्यः स एकस्थाने गौर्भवति । समानमितरच्छाट्यायनकेन ॥ अथैकेषां विज्ञायते संवत्सरे सकृत्पृष्ठान्युपयन्ति । द्वादशाहीने दशरात्रे । तत्र पृष्ठ्यानां स्थानेऽभिप्लवाः षडहा

ऊर्ध्वं द्वादशाहीयात् । दशरात्रान्महाव्रतमुपयन्ति ॥ (ख० १३) ॥ ३ ॥

गतः ॥ ३ ॥

**श्वोभूते प्रतायते पञ्चविंशोऽग्निष्टोमो महाव्रतसामा ॥ ४ ॥**

प्रतायत आरभत उद्गातेत्यर्थः । सौर्यानासाद्य विरमति सारस्वत इत्यादिपशुकाले प्राजापत्यमृषभं तूपरमालभते । प्रजापतये त्वा जुष्टमुपाकरोमीत्यादि । अस्य महाव्रतस्य प्रचारितं मरुत्वतीयैः सह भवति ॥ ४ ॥

**यत्माङ्माहेन्द्रात् ॥ ५ ॥**

भवतीत्यर्थः । अग्रतो भवति ॥ ५ ॥

**तस्मिन्कृते प्रतिप्रस्थाता महाव्रतशिल्पानि व्यायातयति ॥ ६ ॥**

माहेन्द्रस्तोत्रे कृते प्रतिप्रस्थाता माहाव्रतिकानि शिल्पानि उपकरणानि ॥ ६ ॥

**दश वीणादण्डस्यातिमथितानि भवन्ति ॥ ७ ॥**

उदुम्बरेण कृतस्य वीणादण्डस्यातिमथितानि भवन्ति ॥ ७ ॥

**एकैकस्मिन्नतिमथिते दश दश तन्तून्प्रवयाति ॥ ८ ॥**

यदियं दण्ड इत्यादिस्थितेषु दशस्वप्यतिमथितेषु तेषु प्रत्येकं दश दश तन्तवः प्रोताः शततन्तुः ॥ ८ ॥

**स वाणः शततन्तुर्भवति ॥ ९ ॥**

वाणो वीणाविशेषः ॥ ९ ॥

**अध्यधिहोतृषदनं प्रेङ्खꣳ होत्रे प्रबध्नन्ति ॥ १० ॥**

प्रेङ्खं दोलां होताऽऽरोहतीत्येव ॥ १० ॥

**औदुम्बरीमासन्दीमुद्गात्र उपनिदधाति ॥ ११ ॥**

आसन्दीमारोहत्युद्गाता ॥ ११ ॥

**कूर्चफलके अध्वर्यवे ॥ १२ ॥**

उपनिदधात्यनुवर्तते ॥ १२ ॥

**होत्रका उपगातारश्च कूर्चेष्वासते ॥ १३ ॥**

कूर्चेषु होत्रका उपगातारः पत्नय इत्यासते ( आप० श्रौ० २१–१७–१९ ) इति । प्रतिगरार्थं होत्रकाणामुपगातॄणां पत्नीनां च कूर्चानि कल्पयितव्यानि तेष्वासीना भवेयुरित्यर्थः । प्रतिप्रस्थाता ( त्रा ) एतानि कल्पयितव्यानि ॥ १३ ॥

कानिपुनस्तानि—

**निकल्पन्ते सर्वशिल्पानि ॥ १४ ॥**

अत्राप्यापस्तम्बे विशेषः—निकल्पन्ते पत्नयोऽपाघाटलिकास्तालुकवीणाः पिच्छोलाः, इति । निकल्पन्ते वीणावादाः शङ्खा नालीस्तूणवानिति । निकल्पेते ब्रह्मचारी पुंश्चली चाग्रेण सदसो दक्षिणं द्वार्बाहुमार्तिष्यमाणौ ( आप० श्रौ० ११–१७–१६ । १८ ) इति । वाद्यानि च सह वादकैः ॥ १४ ॥

**तं संनयति वाक्सत्यं मनो भद्रं तन्नो भद्रमा नो भद्रमिति त्रिपर्वयोत्कटशलाकया वेणुपर्वणा वेतसशाखया वा वादयित्वा बाणेन शततन्तुना माहेन्द्रस्य स्तोत्रमुपाकरोति ॥ १५ ॥**

तं दण्डमिति गम्यते । संनयति सज्जयति । गतमन्यत् ॥ १५ ॥

**बर्हिषो विकारः ॥ १६ ॥**

स च दण्डो बर्हिषः प्रतिनिधिरित्यर्थः । अथवा—इक्षुकाण्डेन वेणुकाण्डेन वेतसकाण्डेन बाणं शततन्तुं ( बाणेन शततन्तुना ) सह्वाद्याने ब(हाध्वर्युर्ब)र्हिर्भ्यां च माहेन्द्रस्य स्तोत्रोपाकरणं करोति ॥ १६ ॥

**तमुद्गाता वादयित्वा प्रस्तोत्रे प्रयच्छति ॥ १७ ॥**

तमुद्गाता पुनः प्रस्तोत्रे ददाति ॥ १७ ॥

**प्रस्तोताऽध्वर्यवे ॥ १८ ॥**

प्रयच्छतीत्यनुवर्तते ॥ १८ ॥

**तमध्वर्युरन्यस्मै ॥ १९ ॥**

वीणावादाय ॥ १९ ॥

**तं सोऽग्रेण सदसो दक्षिणे द्वार्बाहौ प्रतिवादयन्नास्ते ॥ २० ॥**

तं शततन्तुं मन्त्रेण सदसः पुरस्ताद्दक्षिणस्यां द्वारस्थूणायां प्रतिवादयंस्तिष्ठति ॥ २० ॥

**उपगायन्ति पत्न्योऽपाघाटलिकास्तालुकवीणाः काण्डवीणाः पिच्छोला अलाबुकपिशीष्ण्य इति ॥ २१ ॥**

ननु महाव्रते श्रूयते—' पत्नय उपगायन्ति ' इति । प्रकृतौ श्रूयते—' ऋत्विज उपगायन्ति ' इति । तदेतदृत्विगुपगानं पत्न्युपगानेन निवर्त्यते । ननु—प्रकृतावुद्गात्रा साम्नि गीयमाने सत्यृत्विजोऽन्ये सामैवोपगायन्ति । इह तु पत्नयो वादित्रं वादयन्तीति

भिन्नविषयत्वान्नास्ति निवृत्तिः । मैवम् । गानशब्दस्य शारीरे प्रसिद्धत्वात् । तस्मादृत्विजो निवर्त्य पत्नयः सामोपगायेयुरिति प्राप्ते ब्रूमः— गानशब्दस्य नाक्षरोच्चारणमर्थः किंतु स्वराभिव्यञ्जनं तच्च शरीरेण वादित्रेण वा सिध्यति । अत एव गानतत्त्वज्ञा आहुः —' दारवी गात्रवीणा च द्वे वीणे गानजातिषु ' इति । तच्च गानं ग्रहन्यायेनापूर्वक्रियाविधानान्न प्रकृतिलिङ्गं स्यात् । एवं तर्हि गानोपचयवाचिन उपशब्दस्य वैयर्थ्यमिति चेन्न । वादित्रोपचयसंभवात् । अस्ति हि तत्र वादित्रनादः ' दिक्षु दुन्दुभयो नदन्ति ' इति श्रुतेः । पत्न्युपगानं च वादित्रनादः । ' काण्डवीणाभिरुपगायन्ति ' इति श्रुतेः । अतः सादृश्यात्संनिधानाच्च तदुपचयो युक्तः । तस्मादनिवृत्तेरुपगानयोः समुच्चयः ॥ २१ ॥

**वादयन्त्यः संप्रवदन्ति । सर्वशिल्पे तृतीये ॥ २२ ॥**

गतः ॥ २२ ॥

**पुंश्चलुर्ब्रह्मचारी चोत्तरस्यां वेदिश्रोण्याः संवर्तेते ॥ २३ ॥**

ब्रह्मचारी पुंश्चली च विकल्पेते । अग्रे सदसो दक्षिणां द्वारस्थूणां प्रतिकर्तिष्यमाणावन्योन्यमाक्रोशं करिष्याव इति केचित् ॥ २३ ॥

**मागधः पुंश्चलुश्च दक्षिणस्यां वेदिश्रोण्यां परिश्रयेते ॥ २४ ॥**

उत्तरस्यां वेदिश्रोण्यां पुंश्चली मागधश्च परिश्रयेते । एतौ व्याख्यातौ । एतयोर्मिथुनं कार्यम् ॥ २४ ॥

**दुन्दुभीन्समाघ्नन्ति । दिक्षु प्रबन्धान् ॥ २५ ॥**

दुन्दुभीन्समाघ्नन्ति तदानीं युगपद्ध्मापयन्ति । दिक्षु दुन्दुभीन्प्रबध्नन्ति वेद्याः स्रक्तिष्वेव ॥ २५ ॥

**स्रक्तिष्वेव महावेदेः ॥ २६ ॥**

स्रक्तिः कोणः ॥ २६ ॥

**अपरेणाऽऽग्नीध्रमर्धमन्तर्वेद्यर्धं बहिर्वेदि जानुदघ्नमवटं खात्वाऽऽर्द्रेण चर्मणाऽभिवितत्य शङ्कुभिः परिणिहत्य भूमिदुन्दुभिः पुच्छकाण्डेन भूमिदुन्दुभिमाघ्नन्ति ॥ २७ ॥**

अपरेणाऽऽग्नीध्रमण्डपे भूमिदुन्दुभिमवटं खनन्ति । ( मुखकोश ) अर्धमन्तर्वेद्यर्धं बहिर्वेदि आत्रे(र्द्रे)णर्षभचर्मणोत्तरलोम्नाऽभिसार्य शङ्कुभिः परिणिहत्य तस्य क(च)र्मणः पुच्छकाण्डेन सह भूतं(मि)माहननार्थमभिदधाति । यद्वा—भूमिदुन्दुभिमाघ्नन्ति । चर्म-

-णाऽऽच्छादितमुखं भूगर्ते भूमिदुन्दुभिः पुच्छकाण्डेन ॥ २७ ॥

अपरेणाऽऽग्नीध्रꣳ शूद्रार्यौ चर्मकर्त्रे(कृते) व्यायच्छेते ॥ २८ ॥

शूद्रार्यौ शूद्रश्चाऽऽर्यश्च । आर्यो ब्राह्मणो विद्वान् । शूद्रः प्रसिद्धः ॥ २८ ॥

श्वेतमार्द्रं परिमण्डलं भवति ॥ २९ ॥

प्रतिप्रस्थात्रा चर्म कर्तव्यमिति । आर्द्रं श्वेतं परिमण्डलाकारं परिष्कृत्य चर्मेत्यर्थः ॥ २९ ॥

अन्तर्वेदि ब्राह्मणस्तिष्ठति । बहिर्वेदि शूद्रः ॥ ३० ॥

तिष्ठतीत्युभयत्रान्वयः ॥ ३० ॥

इमेऽरात्सुरिमे सभूतमक्रन्निति ब्राह्मणो ब्रूयात् ॥
इम उद्वासीकारिण इमे दुर्भूतमक्रन्निति शूद्रः ॥ ३१ ॥

ब्रूयादित्युभयत्रान्वयः ॥ ३१ ॥

तं ब्राह्मणः संजित्याऽऽग्नीध्रे चर्माध्यस्यति ॥ ३२ ॥

तं शूद्रम् ॥ ३२ ॥

अग्रेणाऽऽग्नीध्रं कटसंघाते ॥ ( ख० १४ ) ॥ तेजनिसंघाते वा । वितत्योच्छ्रितं लम्बयति ॥ ३३ ॥

तन्निमित्तं व्ययंस्यत उभौ विद्वेषमाणौ ममेदं ममेदमिति शूद्रार्यावुत्तरेणाऽऽग्नीध्रं कटसंघाते तेजनसंघाते वा कटबहुप्रदेशे तेजनबहुत्वे देशे वाऽऽर्द्रं चर्म व्यधनार्थमिषुणाव्यथयितव्यं वितत्योच्छ्रयति । द्विशूलायां वपाबन्धमिव बध्नाति कटसंघाते देशे ॥ ३३ ॥

अग्रेणाऽऽहवनीयꣳ रथेषु राजपुत्राः कवचिनः संनह्य व्यथ(ध)नार्थं चर्मानु परिवर्तन्ते ॥ ३४ ॥

आहवनीयस्य पुरतो रथेषु कवचिनः पुरुषाः संनह्यन्ते ॥ ३४ ॥

तेषामेकैकꣳ सꣳशास्ति ॥ ३५ ॥

तेषां राजपुत्राणाम् ॥ ३५ ॥

माऽपरात्सीर्माऽतिव्यात्सीरिति ॥ ३६ ॥

माऽपरात्सीर्लक्ष्याद्न्यत्र व्यधनं मा कार्षीः । माऽतिव्यात्सीर्वेगमतीत्य परस्ताद्बाणं मा जीगम इत्याह हे वेदि(धि)न् ॥ ३६ ॥

तत्ते विद्धा(द्ध्वा)नातिपातयन्ति ॥ ३७ ॥

राजपुत्रा विध्यन्तीत्येकेषां (२१–१९–१६)इत्यापस्तम्बः ॥ ३७ ॥

उदञ्चोऽपरिमितमवकाशं यात्वा प्रत्यायाय विमुञ्चन्ति ॥ ३८ ॥

बाणान् ॥ ३८ ॥

अष्टौ दासकुमार्य उदकुम्भाञ्छीर्षन्नधि निधाय त्रिः प्रदक्षिणं मार्जालीयं धिष्णियं परिनृत्यन्तीः परियन्ति दक्षिणान्पदो निघ्नतीरिदं मधु गायन्त्यो वाग्वेदभिल्लुका सैनान्गायतु प्राणस्य वादिते सेमान्गीता यजमानानिहावत्विति ॥ ३९ ॥

मार्जालीयान्ते समीपेऽष्टौ दासकुमार्य उदकुम्भैः सह नृत्यन्तीः ॥ ३९ ॥

भिल्लुकां द्वे गायतः। वाग्वेदहिंबिनीति द्वे वाग्वेद-हस्तावारामिति द्वे संवत्सरगाथा द्वे एताः संवत्स-रगाथा भवन्ति ॥ ४० ॥

दासीदासयोरन्योन्यमन्त्रोऽभिहितः । भिल्लुकां द्वे कुमार्यौ गायेतां वाग्वेदहिंबिनीं द्वे गायेतां वाग्वेदहस्तावारां द्वे गायेतां संवत्सरगाथा द्वे गायेताम् ॥ ४० ॥

गाव एव सुरभयो गावो गुल्गुलुगन्धयः । गावो घृतस्य मातरस्ता इह सन्तु भूयसीः ॥ ननु गावो [1]मङ्कीरस्य गङ्गाया उदकं पपुः । पपुः सरस्वतीं नदीं [2]प्राचीश्चोज्जगाहिरे । इमा वयं प्लवा-महे शम्याः प्रतरतामिव । निकीर्य तुभ्यं मध्य आ[3]कैश्यें [4]कश्यों यथा । यदा [5]भङ्ग्याश्विनौ वदत [6]ऋतप[7]र्णक योऽवधीः । आविष्कृतस्य दूषणमु-भयोरकुतः कृत[8]स्यं च ॥ यदा [9]रांखाटचौ वदतो ग्राम्य[10]मङ्कीरदा[11]शकौ । क्षेमे वृ(व्यृ)द्धे ग्रामेणान-ड्वांस्तप्यते वहन् ॥ [12]इदं कल्माष्यो अपि[13]भिदं सोमो असूयत । इद९ हि[14]रण्यैः खी[15]लौं आवा[16]धन्मास्थिभञ्जनम् ॥ हैमहा इदं [17]मधुहिल्लु हि[18]ल्लवे-हमहर्मिमीति हस्तावाराश्च सर्वास्वनुषजन्ते ॥ ४१ ॥

---

१ क. ख. मकिरन्तस्य । २ क. ख. प्राचीं चोज्ज° । ३ क. ख. °कश्योक° । ४ ख. °कश्यौं य° । ५ क. ख. भङ्गेऽश्वि° । ६ क. ख. ऋतुप° । ७ क. °पर्थक । ८ क. ख. °स्य । य° । ९ क. ख. रागान्धौ । १० क. ख. °मकीलदा° । ११ क. ख. °दासकौ । १२ क. ख. °दं कालमष्यो । १३ क. ख. °पि ध्वानि° । १४ क. ख. °रण्यखेला । १५ क. ख. °ला अवा° । १६ क. °यत्साक्षि भ° । ख. °यन्सा° । १७ क. ख. मधविदं हि° । १८ क. ख. हिलिह° ।

सर्वासामृचामन्त एतत्सामानं संवत्सरगाथानां षण्णामपि ॥ ४१ ॥

**तत्रैवोदकुम्भानुपनिनीय यथार्थं गच्छन्ति ॥ ४२ ॥**

तत्रास्मिन्काले स्तोत्रे समाप्ते दासकुमार्य उदकुम्भानुपनिनीय यत्र यत्र साम तत्र तत्र गच्छन्ति ॥ ४२ ॥

**माहेन्द्रस्तोत्रमनुघोषाः शाम्यन्ति ॥ ४३ ॥**

स्तोत्रे समाप्ते घोषा अपि शाम्यन्ति वीणादयः ( दीनाम् ) ॥ ४३ ॥

**स्तुतमनुशाम्य(शस्य)ते ॥ ४४ ॥**

स्पष्टम् ॥ ४४ ॥

**कूर्चयोः फलकयोर्वा तिष्ठन्नध्वर्युः प्रतिगृणाति ॥ ४५ ॥**

अर्कः पवित्रमित्यारभ्य प्रतिष्ठामिति मन्त्र उक्तः सूत्रान्तरे । फलकारोहणमध्वर्योः पश्चादसावेहीति जपः । ततोऽध्वर्युः शस्त्रं प्रतिगृणाति पूर्ववत् । ग्रहमध्वर्युरादत्त इत्याद्यतिग्राह्या हूयन्ते । दशाऽऽग्नेयान् प्रकृतिवद्दशैन्द्रान्प्रकृतिवत् । अथ वैश्वकर्मणादित्यावुक्तौ पूर्वमेव । अथ प्राजापत्यः पञ्चगृहीतं पश्चादेकपात्रस्थं जुहुयात् । प्रजापत ओजस्विन्नोजस्वि(स्वी) त्वं देवेषु इत्यायैन्द्रवत्पञ्चपक्षे युगपद्धोमः । दण्डेन बद्ध्वा कौकिलीवद्विकल्पः । आग्नेयादीनपि दण्डेन बद्ध्वा होमोऽनुमन्त्रणमपि । तन्त्रेण प्राजापत्यं हुत्वा सौर्यान्दण्डेन बद्ध्वा जुहोति । तन्त्रेणानुमन्त्रणम् । सर्वेषां पृथक् पृथक् भक्षणम् । केचिदाग्नेयान् सर्वानेकस्मिन् संसृज्य मयि मेधामित्यादि । एवमैन्द्राग्नमिष्ट्वा ततो वैश्वकर्मणादित्यौ क्रमेण प्राजापत्यम् । पञ्चपक्षे भेदेन । इतरथा (सकृत्पक्षे) भक्षेहीत्यादि नृचक्षसं त्वेत्यवेक्ष्य भक्षयामीति भक्षणम् । अथ सौर्याणां भक्षणं भेदेनैवाथोक्थ्य इत्यादि तन्त्रं प्रकृतिवत् ॥ ४५ ॥

**संतिष्ठते महाव्रतम् ॥ ( ख० १५ ) ॥ ४६ ॥**

**इति सत्याषाढहिरण्यकेशिसूत्रे षोडशप्रश्ने षष्ठः पटलः ।**

पत्नीसंयाजान्तमहः संतिष्ठते । संस्थितेऽहनि ब्रह्मा वाचमित्यापस्तम्बीये विशेषः । संतिष्ठते महाव्रतमहीनसंततय उक्ताः ॥ ४६ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां षोडशप्रश्ने षष्ठः पटलः ।

---

अथ षोडशप्रश्ने सप्तमः पटलः ।

---

**श्वोभूत उदयनीयः स व्याख्यातः ॥ १ ॥**

श्वोभूते महारात्रे बुद्ध्वोदयनीयातिरात्रः स व्याख्यातः ॥ १ ॥

यः प्रायणीयः स उदयनीयः ॥ २ ॥

विधिर्भवति ॥ २ ॥

त्रिषु परःसामसु त्रीनतिग्राह्यान्गृह्णाति ॥ ३ ॥

वक्ष्यमाणेषु त्रिषु अहःसु ॥ ३ ॥

उपयामगृहीतोऽस्यग्नयस्त्वौषधीभ्यो जुष्टं गृह्णामीति प्रथमेऽहनि गृह्णाति । उपयामगृहीतोऽस्योषधीभ्यस्त्वा प्रजाभ्यो जुष्टं गृह्णामीति द्वितीय उपयामगृहीतोऽसि प्रजाभ्यस्त्वा प्रजापतये जुष्टं गृह्णामीत्येतानेवाऽऽवृत्तानर्वाक्सामसु गृह्णीयात् ॥ ४ ॥

स्पष्टम् ॥ ४ ॥

तानुभयानूर्ध्वानप्रवृत्तांश्च विषुवत्युदु त्यं जातवेदसमिति तेषां मध्ये सौर्य१ सप्तमं मध्यमं गृह्णाति ॥ ५ ॥ वाचस्पतिं विश्वकर्माणमूतय इति विश्वजिति वैश्वकर्माणम् । महीमू षु मातरमित्यपरेद्युरादित्यं ते च व्यत्यासमा महाव्रतात्ताबुभौ सह महाव्रते गृह्येते ॥६॥ त्रयस्त्रिंशदेतदहरतिग्राह्या गृह्यन्ते ॥ ७ ॥ प्राकृतैर्वा वैकृतानभ्यस्येत् । वैकृतैर्वा प्राकृतान्दशाऽऽग्नेयान्गृह्णीयात् ॥ ८ ॥ दशैन्द्रान्दश सौर्यान्वैश्वकर्मणादित्यग्रहौ प्राजापत्यं च ॥ ९ ॥ पञ्चपात्रमतिग्राह्यायतने प्रतिदिशं चत्वारि पात्राणि निहितानि भवन्ति ॥ १० ॥ मध्ये पञ्चमम् ॥ ११ ॥ इन्द्रमिद्गाथिन इत्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वाऽर्कवते जुष्टं गृह्णामीति पूर्वार्धे गृह्णाति । एष ते योनिरिन्द्राय त्वाऽर्कवत इति सादयति॥१२॥ समानौ सर्वत्र ग्रहणसादनौ ॥ १३ ॥ अभि त्वा शूर नोनुम इति दक्षिणार्धे । त्वामिद्धि हवामह इति पश्चार्धे ॥१४॥ इमा नु कं भुवना सीषधेमेत्युत्तरार्धे ॥ (ख० १६)॥ तदिदासु(स)भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेष नृम्णः । सद्यो जज्ञानो

निरिणाति शत्रूननु यं विश्वे मदन्त्यूमा इति मध्यमे ॥१५॥तानेकस्मिन्पात्रे समवनीय त्वे क्रतुमपि वृञ्जन्ति विश्व इत्यनुद्रुत्योपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामीति मध्यमे पात्रे गृह्णात्येष ते योनिः प्रजापतये त्वेति सादयति ॥१६॥ यन्नाना जुहुयादात्मनोऽङ्गानि विच्छिन्द्यात् । समानीयाऽऽहुतीः सꣳरुन्ध्यात्तदनु यजमानाः सꣳरुन्धेरन् । स्तोका एवाऽऽत्मानं प्रत्यानीय होतव्याः प्रत्यङ्गानि दधति नाऽऽहुतीः सꣳरुणद्धि (इति) हुत्वा हरति भक्षम् ॥ १७ ॥ तं भक्षयति महस्ते भक्षयामि गर्भं ते भक्षयामि (भुजं ते भक्षयामि ) भुक्तिस्ते भक्षयामि सर्वं ते भक्षयामि सर्वस्याऽऽप्त्यै सर्वस्यावरुद्ध्या इति ॥ १८ ॥

पृश्निप्राणग्रहादयः । त (अ) त्र कृष्णविषाणाऽऽसनमत्र सख्या(सख्य)विसर्गः । न त्वहीनसंततयः । श्वोभूतेऽतिरोढियान्तं यज्ञपुच्छादि सत्रभूतद्वादशाहवत् । अथानूबन्ध्यायां वपायां हुतायां सशिखानि वपन्ते । उदवसानीयान्तं कृत्वा पृष्ठशमनीयैः पृथक् पृथक् सौत्रामणी च ॥ ९–१८ ॥

त्र्यनीकां व्याख्यास्यामः ॥ १९ ॥

गतम् ॥ १९ ॥

तेषां प्राकृतैरतिग्राह्यैः कल्पो व्याख्यातः ॥ २० ॥

तेषां त्र्यनीकानाम् ॥ २० ॥

ऐन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथाऽऽग्रयणाग्रम् ॥ २१ ॥ एवं त्र्यनीकाः परिवर्तन्त इत ऊर्ध्वं प्राग्विषुवत ऊर्ध्वं विषुवत आवृत्ताावृत्तेषु ॥२२॥

गवामयनमभिप्लवेषु षडहसामान्यात्पृष्ठ्यः षडहवत् । पूर्वस्मिंस्त्र्यह उत्तरे वा ( पूर्वस्मिन् ) पक्षे तथैवातिग्राह्या भवेयुः, इति । ज्योतिर्गौरायुरिति नामधेयानीति केचिद्व्याचक्षते । संतिष्ठते गवामयनम् । द्वादशाहेऽहीने काठकप्राप्तिः सर्वाँल्लोकानहीनेनाथो सत्रेणेति वचनात् ॥ २१ ॥ २२ ॥

शुक्राग्रो विषुवानित्यात्रेयः । यथादृष्टमिति बादरायणः ॥ ( ख० १७ ) ॥ २३ ॥

इति सत्याषाढहिरण्यकेशिसूत्रे षोडशप्रश्ने सप्तमः पटलः ।

गतम् ॥ २३ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां षोडशप्रश्ने सप्तमः पटलः ।

अथ षोडशप्रश्नेऽष्टमः पटलः

अथ पशुक्लृप्तिः ॥ १ ॥

वक्ष्यत इति शेषः ॥ १ ॥

आग्नेयं प्रायणीयेऽतिरात्र आलभन्ते । श्वोभूते सारस्वतीं मेषीम् ॥ २ ॥

आलभन्त इत्युभयत्रान्वयः ॥ २ ॥

एवं विहितानैकादशिनानन्वहमालभन्ते ॥ ३ ॥

अन्वहं सद्यः ॥ ३ ॥

समित्य समित्य पुनः पुनरेकादशिनीमभ्यावर्तयन्ति ॥ ४ ॥

सौर्यं विषुवत्युपालम्भ्यमित्यापस्तम्बसूत्रम् ॥ ४ ॥

तेषामेवमुपाकुर्वतां द्वादशाहस्य सप्तदश उक्थ्ये द्वात्रिंशतमेकादशिन्योऽपवृज्यन्ते ॥ ५ ॥

तेष्वेवाऽऽलभन्ते ॥ ५ ॥

नवाहान्यतिरिच्यन्ते ॥ ६ ॥

नवस्वहःसु ॥ ६ ॥

तेषु गव्यानातिरिक्तपशून् ॥ ७ ॥

आलभन्त इति शेषः ॥ ७ ॥

वैष्णवं वामनमेकविंशे । ऐन्द्राग्नं त्रिणवे । वैश्वदेवं त्रयस्त्रिंशे । द्यावापृथिव्यां धेनुं प्रथमे छन्दोमे । तस्या एव वायव्यं वत्सं मध्यमे ।

आदित्यामविवशामुत्तमे मैत्रावरुणीमविवाक्ये । प्राजापत्यमृषभं तूपरं महाव्रते । आग्नेयमुदयनीय इति पालिङ्गायनिकान् ॥ ८ ॥

गतः ॥ ८ ॥

अथ काठका ऐकादशिनान्प्रतिविभज्याप्रतिविभज्य वा प्रायणीयोदयनीययोरालभन्ते ॥ ९ ॥

काठका इति बहुवचनं पूजार्थम् ॥ ९ ॥

आग्नेयमन्तर्धौ रथंतरपृष्ठेष्वैन्द्रं बृहत्पृष्ठेषु ॥ १० ॥

रथंतरपृष्ठेष्वाग्नेयं बृहत्पृष्ठेष्वैन्द्रमिति वैखानससूत्रम् ॥ १० ॥

अपिवाऽऽग्नेन्द्र( यं )रथंतरपृष्ठेष्वैन्द्राग्नं बृहत्पृष्ठेषु ॥ ११ ॥

अपि वेति शाखान्तरमतद्योतनार्थम् ॥ ११ ॥

सौर्यं विषुवत्युपालभन्तेऽथ गव्यानतिरिक्तपशून् ॥ १२ ॥

तेष्वेव नवसु गव्यान् ॥ १२ ॥

तत्र विकारः—

शितिपृष्ठं बार्हस्पत्यं त्रयस्त्रिंशे । द्यावापृथिव्यां धेनुं प्रथमे छन्दोमे । तस्या एव वत्सं वायव्यं मध्यमे । वाचे पृश्निमुत्तमे । मैत्रावरुणमविवाक्ये । वैश्वकर्मणमृषभं तूपरं महाव्रत इति वाजसनेयकम् ॥ १३ ॥

सर्वत्राऽऽलभन्त इत्यन्वयः ॥ १३ ॥

आग्नेयमग्निष्टोम आलभन्ते । ऐन्द्राग्नमुक्थ्ये द्वितीयमैन्द्रं वृष्णिं षोडशिनि तृतीयं सारस्वतीं मेषीमतिरात्रे चतुर्थीमित्येकेषां ते यदि प्रभवः पशवः स्युरेवमेवाहरहरालभेरन् ॥ १४ ॥

स्पष्टोऽर्थः ॥ १४ ॥

यदि पश्वेकादशिन्येयुराग्नेयमेव प्रथमेऽहन्नालभेरन्नथेतराननूचो यथापूर्वं वारुणं पेत्वमुत्तमं यूनमपर्यवे तेष्वाग्नेयमेव प्रथमेऽहन्नालभेरन्नथेतराननूचो यथापूर्वं वारुणं पेत्वमुत्तमं तैरेव विपर्यासमीयुः ॥ ( ख० १८ ) ॥ १५ ॥

ऐन्द्राग्नं वा सर्वत्र ( २१–२३–१४ ) इत्यापस्तम्बः । क्रतुपशूनेव समभ्युच्चयवदन्वहमालभेरन्यदि विभवः पशवः स्युः । ऐकादशिनान्वा विहृतानिति वाजसनेयकम् ( भ० श्रौ० २१–२३ ) इति भरद्वाजः । गतमन्यत् ॥ १९ ॥

अथोत्सर्गिणामयनस्य कर्मोच्यते—

**उत्सर्गिणामयनं व्याख्यास्यामः ॥ १६ ॥**

उत्सर्गिणामयनमिति कर्मनामधेयम् ॥ १६ ॥

**गवामयनेन व्याख्यातम् ॥ १७ ॥**

गवामयनमेव गुणविकृतं दाक्षायणयज्ञवत् । गवामयनोत्सर्गिणामयनेन यक्ष्यामहे प्रजापतिमवाप्नवानीत्यादि गवामयनवत् फलं निर्दिश्य, आयुष्यपशुस्वर्गार्थं फलं केचिदेवं वदन्ति । केचिदुत्सर्गिणामयनेन यक्ष्यामहे, आयुरर्थं पुत्रार्थं पश्वर्थं नरकपतननिवृत्त्यर्थं वा सर्वं गवामयनवत् ॥ १७ ॥

तत्र निर्णयाय कंचिद्विचारं दर्शयति—

**संवत्सरस्य पौर्णमासीममावास्यामुत्सृजेयुः ॥ १८ ॥**

उत्सृज्यां ३ नोत्सृज्या३मिति ( तै० सं० ७–५–७ ) उत्सर्गपक्षे यज्ञविच्छेदः । अनुत्सर्गपक्षे श्वासनिरोध इति दोषद्वयं मनसि निधाय ब्रह्मवादिनो विचारयन्ति । प्लुतिर्विचारार्था । तत्राभिज्ञाः प्राजापत्यपश्वादिभिर्विच्छेदस्य समाधातुं शक्यत्वाच्छ्वासनिरोधपरिहारायोत्सर्जनपक्षमेवाध निश्चितवन्तः । तमेव दिनविशेषं दर्शयति—अमावास्यां च पौर्णमास्यां चोत्सृज्यम् ( ७–५–७ ) इति । एतयोरमावास्यापौर्णमास्योर्यज्ञवाहित्वं प्रसिद्धम् । अतस्तयोस्तिथ्योर्यदहर्यदहः प्राप्तं तदुत्सृज्यमित्येषां निर्णयः ॥ १८ ॥

अथान्येषां पक्षमाह—

**तान्वोपेयाद्वा नोत्सृजेयुस्तदेव श्वः कुर्युः । अन्तेऽमावास्यां पौर्णमासीं वोत्सृजेयुः । अन्तमस्याह्नस्त्रिवृद्बहिष्पवमानं वायो शुक्रो अयामित एतमु त्यं दशक्षिप इति ॥ १९ ॥**

तस्मात्तयोरुत्सर्गो न युक्त इति ॥ १९ ॥

इत्थमुत्सर्गं विशदीकृत्य तत्रानुष्ठेयं विशेषं विशदयति—

**यदहरुत्सृजेयुस्तदहरिष्टिं निर्वपेयुस्त आग्नेयमरुत्वतीयपुरोडाशौ निरुप्येते ऐन्द्रावैष्णवा ऐन्द्राबार्हस्पत्या ऐन्द्रावैश्वदेवा वाऽध्वरकल्पा वा ॥२०॥**

तत्तस्मिन्नुत्सर्गदिने चत्वारि हवींषि निर्वपेयुः ॥ २० ॥

**तेषां ये पुरोडाशिनस्त उपवसन्ति। ये सांनायिनस्त एतदहर्वत्सानपाकुर्वन्ति । पशुश्च ॥ २१ ॥**

तेषामध्वरकल्पानाम् ॥ २१ ॥

**प्राजापत्यः पयाꣳसि च ॥ २२ ॥**

प्राजापत्यं पशुमालभन्ते ( तै० सं० ७-१-७ ) इति श्रुतेः । उत्सर्गपक्षे पयांसि ॥ २२ ॥

**यथा वैश्यस्तथा तामस्येन्द्राय वसुमत इन्द्राय हरिवत इन्द्राय बृहस्पतिवते विश्वदेव्यावते पुरोडाशाः । अष्टावेकादश द्वादश कपाला आनुपूर्व्येण। सवनकाला व्याख्याताश्च ॥ २३ ॥**

यथा वसुमानाग्निः प्रातःसवनस्य तथा मरुत्वानिन्द्रो माध्यंदिनस्य सवनस्य स्वामी । वसुमतोऽग्नेस्तत्स्वामित्वं ब्राह्मणादवगन्तव्यम्—'प्रातःसवनं यदग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपन्ति । ऐन्द्रं दधि । इन्द्रस्य वै मरुत्वतो माध्यंदिनꣳ सवनं यदिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं निर्वपन्ति। विश्वेषां वै देवानामृभुमतां तृतीयसवनं यद्वैश्वदेवं द्वादशकपालं निर्वपन्ति' ( तै० सं० ७-१-७ ) इति ॥ २३ ॥

**उत्स्रष्टार इति ते वत्सानपाकुर्वन्ति ॥ २४ ॥**

यदैन्द्रं दधि भवति ( ७-१-७ ) इति ब्राह्मणम् ॥ २४ ॥

**प्रातः पशुमालभन्ते तस्य वपया प्रचरन्ति । ततो वैश्वदेवो द्वादशकपालः । वैश्वदेवश्चरुस्तृतीयसवनः संतिष्ठते । पृषदाज्येन चरिते पत्नीः संयाजयन्ति पत्नीः संयाजयन्ति ॥(ख०१९) ॥२५ ॥**

इति सत्याषाढहिरण्यकेशिसूत्रे षोडशप्रश्नेऽष्टमः पटलः ।

इति सत्याषाढहिरण्यकेशिसूत्रे षोडशप्रश्नः ॥

अथेयं पद्धतिः—सर्वं गवामयनवदौपवसथ्यान्तं कृत्वा प्रायणीयातिरात्रप्रभृति प्रथममासान्तं कुर्वन्ति । पृष्ठ्यषडहमित्यर्थः । पत्नीसंयाजान्ते मध्वशनादिकं कृत्वोत्तरस्याग्नेर्वसतीवरीर्गृहीत्वा, ऐन्द्रस्य दध्नः शाखाहरणादि कुम्भ्यालेपनान्तं, रात्रौ वसतीवरीः परिहृत्य तासु मृत्पिण्डमवधाय परिस्तरणादि, विष्णो हव्यमित्युक्तमैन्द्रस्य दध्नः कृत्वा तण्डुलैरातञ्चनम् । न पश्चाद्दोहादयः । एवं कृत्वोपवसति ।

श्वोभूते वाहनक्रमेणाऽऽगच्छति । गवामयानिकं तस्यां ( तस्मिन् ) वा त्यागः । अभिप्लवानां प्रथमभूतस्याह्नो ज्योतिषस्त्यागः । तस्याह्नः प्रातिनिधिः प्राजापत्यः पशुः ।

तं कुर्वन्ति, शाखाद्याहरणादि सवनीयवत् । प्रस्तर एव स्फ्यलेखायां वाऽऽज्यग्रहणम् । प्रयुनज्मि तिस्रो विष्णो नित्येति कृत्वा त्रिवृताऽग्निष्टोमं ( त्रिवृताऽग्निष्टं ) परिवीय विस्रस्य प्रजापते जुष्टमुपाकरोमीति वाजपेयवत् । प्रातःकाले वपया प्रचर्य मार्जनान्तम् ।

अग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपन्ति । पात्रसादनादि पशुपुरोडाशवत् । अग्नये वसुमते जुष्टं निर्वपामि । अग्ने वसुमन्हव्य५ रक्षस्वेत्येवमादिनिगमाः । पर्यग्निकरणकाल ऐन्द्रं सांनाय्यमाहृत्योभयोः पर्यग्निकरणं पशुपुरोडाशेन सहैवेति केचित् । आसन्नाभिमर्शनं कृत्वा पशुपुरोडाशेन प्रचर्यैन्द्रेण प्रचारः । तयोः स्विष्टकृदादि समानमिडामार्जनान्तं, सानाय्यं समुपहूय भक्षयन्ति, यजमाना इत्युपह्वयध्वमित्युपहवः (ह्वायः) । तूष्णीं भक्षणम् । केचित् सोमभक्षणवदिच्छन्ति एतत्सोमपीथा ह्येतर्हीति श्रुतेः ।

केचिद्वैशेषिकाञ्शाखाहरणचतुर्धाकरणपिष्टलेपफलीकरणकपालविमोकप्रणीतामार्जनोपवेषोद्वासनादि( दीन् ) कुर्वन्ति ।

मध्यंदिनकाले प्राप्ते पशुपुरोडाशेन प्रचर्येडान्तं कृत्वा—इन्द्राय त्वा मरुत्वते पुरोडाशमेकादशकपालमैन्द्रं चरुम् । पात्रसादनादि । इन्द्राय मरुत्वते जुष्टं० इन्द्राय जुष्टं० इन्द्रमरुत्वन्हव्य५ रक्षस्वेन्द्र हव्यमित्येवमादिनिगमाः । आसन्नाभिमर्शनान्तं कृत्वा हविराहुत्यादीडामार्जनान्तम् ।

तृतीयसवनकाले शृत५ हविः ३ शमितरित्यादिपशुना प्रचर्येडामार्जनान्ते वैश्वदेवं द्वादशकपालं निर्वपति । वैश्वदेवं चरुम् । पात्रसादनाद्यासन्नाभिमर्शनान्ते हविराहुतिप्रभृति तन्त्रेण प्रक्षेपः । पश्चावाज्यभागौ नित्यौ ।

अथवैषां हविषां स्थाने सवनीयान्पशुपुरोडाशान्निर्वपति—इन्द्राय हरिवत इत्याद्यध्वरकल्पं वा । आग्नावैष्णवमष्टाकपालमित्यादि । सवने मैत्रावरुणमेककपालमिति सर्वपक्षेषु विद्यते । प्राजापत्यः पशुः । अग्नीदोपयजानित्यादि पाशुकं कर्म पत्नीसंयाजान्तं पूर्ववत् ।

वसतीवरीणां च ग्रहणं पूर्वगृहीतमेव । उत्तरस्मा अह्ने शाखाहरणादि अहीनसंततयः । रात्रौ परिस्तरणान्तम् । केचित्प्राजापत्यस्य पशोः कृत्स्नसंस्थामिच्छन्ति । श्वोभूते महारात्रे बुद्ध्वा अग्ने नयेत्यादि गामुक्थ्यं बृहत्सामेत्यादि । एवमत ऊर्ध्वं षडहे ( हान् ) मासान् संपाद्य पूरयित्वोत्सर्गः । यन्मासादिभूतमभिप्लवानां प्रथमं ज्योतिःसंज्ञकं तदुत्स्रष्टव्यम् । उत्सृष्टेष्वहःसु प्राजापत्यः पशुरग्नये वसुमत इत्यादयश्च पूर्वरात्रौ दधिकरणं च वसतीवरीषु मृत्पिण्डनिधानं च सर्वत्र कुर्वन्ति । प्राक्स्विष्टकृतः पञ्च ज्योतींष्युत्सृष्टानि, पिष्टवत ऊर्ध्वं पृष्ठ्यषडहादि, भूतानि चत्वारि त्रयस्त्रिंशान्यहानि उत्सृष्-

व्यानि । पञ्च मासान् भूतस्य त्रयस्त्रिंशस्य नोत्सर्गः । संभार्यसंज्ञकस्याभिप्लवषडहादिभूतस्य ज्योतिष उत्सर्गः । अथैकेषामित्यापस्तम्बीये विकल्पः । एककर्तृकस्तोत्राणीत्यादि । एवमुत्सृज्य । एवं कृत्वोदयनीयातिरात्रमुपेत्यावभृथादुदेत्योदयनीयाद्युदवसानीयान्तं कृत्वा पुनश्चोखासंभरणादिकं कृत्वा दीक्षित्वा तानुत्सृष्टान् पुनरुपेयुः । न प्रायणीयोदयनीयौ । एवमुदवसानीयान्तम् ।

ततः पृष्ठशमनीयोभयस्य तन्त्रेण सौत्रामणी मैत्रावरुणी च त्र्यनीकाऽतिग्राह्य एकादशिनी चोत्सर्गिणामयने वर्तमाना भवेयुः । यस्याह्नो( ह्न उ )त्सर्गप्राप्तिस्तस्याह्नः प्राप्तः सवनीयातिग्राह्याणां त्याग एव । उत्सृष्टानां पुनराहरणे चोत्सर्गे यत्पश्वादि प्राप्तं तथेह ( थेदं ) कर्तव्यमायुष्यार्थमेतदुत्सत्रं पुत्रार्थं पश्वर्थं स्वर्गार्थं वा नरकयातनानिवृत्तिकारणं चैवं गुणविकृतस्य फलमिति । पत्नीः संयाजयन्तीति द्विरुक्तिः प्रश्नसमाप्त्यर्था ॥ २९ ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां षोडशप्रश्नेऽष्टमः पटलः ।

---

प्रयोगवैजयन्त्यास्तु मालायाः सूत्रसंस्थितेः ।
द्वादशाहस्येह कृतो निर्णयः कौस्तुभो मणिः ॥
मध्यगो यज्ञवपुषस्तुष्टयेऽस्तु मयाऽर्पितः ।
गृह्णाति हि किमप्येष भक्तैर्यद्यत्ततः कृतम् ॥

इति सत्याषाढहिरण्यकेशिसूत्रव्याख्यायां महादेवशास्त्रिसंकलितायां प्रयोगचन्द्रिकायां षोडशप्रश्नः ॥

## अथ सत्याषाढहिरण्यकेशिसूत्रे प्रायश्चित्ताध्यायापरपर्यायपञ्चदशप्रश्नगतसूत्राणां क्रमेण प्रतीकानि

इति सत्याषाढहिरण्यकेशिसूत्रे पञ्चदशषोडश-
प्रश्नगतसूत्राणां प्रतीकानि ।